विरजोविपाप्मत्वानुसन्धानम्

प्राणापान - व्यानोदान - समाना मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा । वाङ्मन - श्चक्षुश्श्रोत्र - जिह्वाघ्राणरेतोबुद्ध्याकूति - स्सङ्कल्पा मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। त्वक्चर्म - मांग्ंस - रुधिर - मेदो - मज्जा स्नायवो - ऽस्थीनि मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। शिरः पाणि - पादपार्श्वपृष्ठोरूदर - जङ्घशिश्नोपस्थ - पायवो मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा॥

पृथिव्याप - स्तेजो - वायु - राकाशा मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। शब्द - स्पर्श - रूप - रस - गन्धा मे शुद्ध्यन्तां ज्योतिरहं विपाप्मा भूयासग्गं स्वाहा। मनो - वाक्काय - कर्माणि मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। अव्यक्तभावै - रहंकारैर्ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। आत्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्गं स्वाहा। अन्तरात्मा मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। परमात्मा मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा। अन्नमय - प्राणमय - मनोमय - विज्ञानमय - मानन्दमयमात्मा मे शुद्ध्यन्तां ज्योति - रहं विरजा विपाप्मा भूयासग्गं स्वाहा।

देहे सर्वदेवतान्यासः - आत्मरक्षा

प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । बाह्वोरिन्द्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । हृदये

शिवस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वामदेवस्तिष्ठतु । पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशङ्करौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । ततो बहिः सर्वतोऽग्निर्ज्वालामाला - परिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । मां रक्षन्तु ॥

अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः । मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्रगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा मे आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः- प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः ॥

## श्रीगणपतिध्यानम्

ओं विनायकाय नमः (१६) । ओं वक्रतुण्डाय नमः (१६) । ओं हेरम्बाय नमः (१६) । ओं गणपतये नमः (१६) । ओं श्रीं विद्यागणेशाय नमः । (१६)

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो विनायकः ॥

धूमकेतुर्गणाध्यक्षः फालचन्द्रो गजाननः ।
वक्रतुण्डः शूर्पकर्णो हेरम्बः स्कन्दपूर्वजः ॥ श्रीगणेशाय नमः ।
(षोडशैतानि नामानि यः पठेत् शृणुयादपि ।
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ॥)

गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ।
अमोघसिद्धिरमितो मन्त्रश्चिन्तामणिर्निधिः ।

सुमङ्गलो बीजमाशापूरको वरदः शिवः ।
काश्यपो नन्दनो वाचासिद्धो ढुण्ढिर्विनायकः ॥

(मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ।
यः स्तौति मद्गतमना मदाराधनतत्परः ।
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः ॥)

नमो नमः सुरवरपूजितांघ्रये नमो नमो निरुपममङ्गलात्मने ।
नमो नमो विपुलपदैकसिद्धये नमो नमः करिकलभाननाय ते ॥

परमा करुणामूर्तिः कलौ प्रत्यक्षदैवतम् ।
महागणपतिर्विघ्नान्हत्वाऽपोह्य दुराशयान् ॥

प्रदाय सन्मतिं, तस्मिन्दृढां भक्तिमचञ्चलाम्।
दत्वा, प्रीत्याऽनुगृह्णातु, शरणं तं भजामहे॥

रक्षामन्त्रमननम्

१. ओं वक्रतुण्डाय हुं। (४)

२. ओं वक्रतुण्डाय हुं ओं नमो हेरम्ब मदमोदित मम संकष्टं निवारय निवारय हुं फट् स्वाहा (४)

३. ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा(४)

४. ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं कएईलह्रीं तत्सवितुर्वरेण्यं, गणपतये क्लीं हसकहलह्रीं भर्गो देवस्य धीमहि, वरवरद सौः सकलह्रीं श्रीं धियो यो नः प्रचोदयात् सर्वजनं मे वशमानय स्वाहा। (४.)

५. ओं ह्रीं नमः शिवाय। (३)

६. ओं ऐं ह्रीं श्रीं ओं ऐं ह्रीं श्रीं, ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गीश्वरि सर्वजनमनोहरि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराज वशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्व दुष्टमृगवशङ्करि सर्वसत्ववशङ्करि, सर्वलोकवशङ्करि, त्रैलोक्यं मे वशमानय स्वाहा, सौः क्लीं ऐं श्रीं ह्रीं ऐं॥ (३)

७. ओं ऐं ह्रीं श्रीं, ऐं ग्लौं ऐं ओं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक् चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा। ओं॥ (३)

८. ओं ऐं श्रीं ह्रीं क्लीं चामुण्डायै विच्चे। (३)

९. ओं ऐं क्लीं सौः सौः क्लीं ऐं (३)

१०. ओं कएईलह्रीं हसकहलह्रीं सकलह्रीं श्रीं (३)

११. ओं श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं, क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं, (३)

१२. ओं कामदेवाय विद्महे पुष्पबाणाय धीमहि।

तन्नोऽनङ्गः प्रचोदयात् (४)

१३. ओं नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा। (४)

१४. ओं द्रां द्राविण्यै मकरध्वजाय द्राविणीबाणाय पद्मोत्पलं हं क्लीं हुं फट् स्वाहा। (४)

१५. ओं द्रीं क्षोभिण्यै मकरध्वजाय क्षोभिणीबाणाय बिल्बोत्पलं हं क्लीं हुं फट् स्वाहा। (४)

१६. ओं क्लीं वशीकरण्यै मकरध्वजाय वशीकरणीबाणाय जम्बूत्पलं हं क्लीं हुं फट् स्वाहा। (४)

१७. ओं ब्लूं आकर्षिण्यै मकरध्वजाय आकर्षिणी बाणाय रक्तोत्पलं हं क्लीं हुं फट् स्वाहा। (४)

१८. ओं सः संमोहिन्यै मकरध्वजाय संमोहिनीबाणाय नीलोत्पलं हं क्लीं हुं फट् स्वाहा। ४

मातृकान्यासः

ओं अं (शिरसि) आं (मुखे) इं ईं (नेत्रयोः) उं ऊं (कर्णयोः) ऋं ॠं

(नासयोः) लृं लॄं (कपोलयोः) एं ऐं (ओष्ठयोः) ओं औं (दन्तपङ्क्तौ) अं (जिह्वाग्रे) अः (कण्ठे) कं खं गं घं ङं (दक्षबाहौ) चं छं जं झं ञं (वामबाहौ) टं ठं डं ढं णं (दक्षपादे) तं थं दं धं नं (वामपादे) पं-फं (पार्श्वयोः) बं (पृष्ठे) भं (नाभौ) मं (जठरे) यं (हृदये) रं (दक्षकक्षे) लं (गलपृष्ठे) वं (वामकक्षे) शं (हृदयात् दक्षकराङ्गुल्यन्तं) षं (हृदयात् वामकराङ्गुल्यन्तं) सं (हृदयात् दक्षपादांगुल्यन्तं) हं (हृदयात् वामपादांगुल्यन्तं) ळं (कटीतः पादाङ्गुल्यन्तं) क्षं (कटीतः ब्रह्मरन्ध्रान्तं)

ध्यानम्

४ गुरुं ध्यायामि । ४ परमगुरुं ध्यायामि । ४ परमेष्ठिगुरुं ध्यायामि । ४ परापरगुरुं ध्यायामि । ४ शिवगुरुं ध्यायामि । ४ मेधादक्षिणामूर्तिगुरुं ध्यायामि । समस्तगुरुमण्डलरूपिणीं बालां ध्यायामि । महागणपतिं ध्यायामि । कामेश्वरं ध्यायामि । कामेश्वरीं ध्यायामि । कामेश्वर्यङ्कमध्यगां सपरिवारां बालां ध्यायामि । लक्ष्मीनारायणौ ध्यायामि । छायासुवर्चलासमेत श्री सूर्यं ध्यायामि ।

मन्त्रजपः

वक्रतुण्डगणपतिमन्त्रजपः

अस्य श्रीवक्रतुण्डमहागणपतिमहामन्त्रस्य, भार्गवः ऋषिः । अनुष्टुप्छन्दः । श्रीवक्रतुण्डमहागणपतिर्देवता । ओं वं[1] बीजम् । यं शक्तिः । हुं कीलकम् । श्रीवक्रतुण्डमहागणपतिप्रीत्यर्थे जपे विनियोगः । (पूजायां विनियोगः)

1. सर्वत्र ब्रह्मप्रणवयोजनं कुर्यात् । उपनीतस्य वेदाध्ययनाधिकारवत एव ब्रह्मप्रणवेऽधिकारः । अन्ये तत्स्थाने आं इति योजयेयुः इति शिष्टाः ।

करन्यासः- [१]वं अङ्गुष्ठाभ्यां नमः । क्रं तर्जनीभ्यां नमः । तुं मध्यमाभ्यां नमः । ण्डां अनामिकाभ्यां नमः । यं कनिष्ठिकाभ्यां नमः । हुं करतलकरपृष्ठाभ्यां नमः ।

अङ्गन्यासः- [१]वं हृदयाय नमः । क्रं शिरसे स्वाहा । तुं शिखायै वषट् । ण्डां कवचाय हुं । यं नेत्रत्रयाय वौषट् । हुं अस्त्राय फट् ।

भूर्भुवस्सुवरों (दिग्बन्धः-) ध्यानं -

उद्यद्दिनेश्वररुचिं निजपद्महस्तैः-
पाशाङ्कुशाभयवरान् दधतं गजास्यम् ।
रक्तांबरं सकलदुःखहरं गणेशं
वन्दे प्रसन्नमखिलाभरणाभिरामम् ।।

लमित्यादिपञ्चपूजा- [१]लं पृथिव्यात्मकं गन्धं समर्पयामि । हं आकाशात्मकं पुष्पं समर्पयामि । यं वाय्वात्मकं धूपमाघ्रापयामि । रं अग्न्यात्मकं दीपं समर्पयामि । वं अमृतात्मकं अमृतोपहारं निवेदयामि । मूलमन्त्रः- ओं वक्रतुण्डाय हुं । (१०८-३३६-१००८ वारं जपेत्) हृदयादिन्यासः । भूर्भुवस्सुवरों (इति दिग्विमोकः) ध्यानम् । लमित्यादि पञ्चपूजा ।

गुह्यातिगुह्यगोप्ता त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ।।
इति श्रीमहागणपतेर्वामहस्ते जपं समर्पयेत् ।

महागणपतिमन्त्रजपः

अस्य श्रीमहागणपतिमहामन्त्रस्य गणक ऋषिः । निचृद्गायत्री छन्दः । महागणपतिर्देवता । ओं गं बीजं, स्वाहा शक्तिः, ग्लौं कीलकं, महागणपतिप्रीत्यर्थे जपे विनियोगः ।

करन्यासः- ओं गां अङ्गुष्ठाभ्यां नमः । श्रीं गीं तर्जनीभ्यां नमः । ह्रीं गूं मध्यमाभ्यां नमः । क्लीं गैं अनामिकाभ्यां नमः । ग्लौं गौं कनिष्ठिकाभ्यां नमः । गं गः करतलकरपृष्ठाभ्यां नमः ।

हृदयादिन्यासः- ओं गां हृदयाय नमः । श्रीं गीं शिरसे स्वाहा । ह्रीं गूं शिखायै वषट् । क्लीं गैं कवचाय हुम् । ग्लौं गौं नेत्रत्रयाय वौषट् । गं गः अस्त्राय फट् । भूर्भुवस्सुवरों (दिग्बन्धः) ।

ध्यानम्- बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्व विषाणरत्नकलशप्रोद्यत्करांभोरुहः ।
पायाद्वल्लभया सपद्मकरयाऽऽश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥

लमित्यादि पञ्चपूजा- लं पृथिव्यात्मकं गन्धं समर्पयामि । हं आकाशात्मकं पुष्पं समर्पयामि । यं वाय्वात्मकं धूपमाघ्रापयामि । रं अग्न्यात्मकं दीपं दर्शयामि । वं अमृतात्मकं अमृतोपहारं निवेदयामि ।

मूलमन्त्रः- ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा । (१०८-३३६ वारं जपः)

हृदयादिन्यासः । भूर्भुवस्सुवरों (दिग्विमोकः ।) ध्यानम् । लमित्यादि पञ्चपूजा ।

गुह्याति गुह्यगोप्ता त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ॥
इति देवस्य वामहस्ते जपं समर्पयेत् ।

मातङ्गीध्यानम्

ओं ऐं ह्रीं श्रीं ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गीश्वरि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराज वशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि त्रैलोक्यं मे वशमानय स्वाहा, सौं क्लीं ऐं, श्रीं ह्रीं ऐं ओं नमः ह्रीं ओं (९)

श्रीश्रीविद्यागणेशमन्त्रजपः

अस्य श्रीश्रीविद्यागणेशमहामन्त्रस्य, गणकः ऋषिः । देवीगायत्रीनृच्विद्गायत्री त्रिष्टुभनुष्टुब्जगत्यश्छन्दांसि । श्रीविद्या-गणेशो देवता । ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकम् । श्रीविद्यागणेशप्रीत्यर्थे जपे विनियोगः ।

ओं ह्रीं श्रीं ऐं क्लीं सौः ह्रीं सर्वज्ञायै ह्रां गां ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः । ७ नित्यतृप्तायै ह्रीं गीं विष्ण्वात्मने तर्जनीभ्यां नमः । ७ अनादिबोधायै ह्रूं गूं रुद्रात्मने मध्यमाभ्यां नमः । ७ सर्वस्वतन्त्रायै ह्रैं गैं ईश्वरात्मने अनामिकाभ्यां नमः । ७ नित्यमलुप्तशक्तये ह्रौं गौं सदाशिवात्मने कनिष्ठिकाभ्यां नमः । ७ अनन्तायै ह्रः गः सर्वात्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । (७-ओं ह्रीं श्रीं ऐं क्लीं सौः ह्रीं इत्यस्य सङ्केतः ।)

भूर्भुवस्सुवरों (दिग्बन्धः) । ध्यानं-

द्वाभ्यां विभ्राजमानं धृतकलशमहाशृङ्खलाभ्यां भुजाभ्यां
बीजापूरादि बिभ्रद्दशभुजमरुणं नागभूषं त्रिणेत्रम् ।
सन्ध्या सिन्दूरवर्णं स्तनभरनमितं तुन्दिलं चन्द्रचूडं
कण्ठादूर्ध्वं करीन्द्रं युवतिमयमधो नौमि विद्यागणेशम् ॥

लमित्यादि पञ्चपूजा।

मूलमन्त्रः- ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं कएईलह्रीं तत्सवितुर्वरेण्यं गणपतये क्लीं हसकहलह्रीं भर्गो देवस्य धीमहि वरवरद सौः सकलह्रीं श्रीं धियो यो नः प्रचोदयात् सर्वजनं मे वशमानय स्वाहा। (१०८-३३६ बारं) हृदयादिन्यासः। भूर्भुवस्सुवरों (दिग्विमोकः)। ध्यानं, लमित्यादि पञ्चपूजा। जपसमर्पणम्

प्रार्थना-

ओं वक्रतुण्ड महाकाय श्रिया वल्लभया युत।
रक्षास्मानस्मदीयांश्च श्रिया भूत्या समेधय॥ (९)

श्रीमहागणपतिध्यानम्

ओं तीव्रा - ज्वालिनी - नन्दा - भोगदा - कामदायिनी - उग्रा-तेजोवती - सत्या - विघ्ननाशिनीरूप सर्वशक्तिकमला-ध्यासिन्! धर्माधर्मज्ञानाज्ञान - वैराग्यावैराग्य - ऐश्वर्यानैश्वर्य-पीठाञ्चल - मध्यगत!

विनायक - कवीश्वर - विरूपाक्ष - विश्वसिद्ध - ब्रह्मण्य-निधीशाख्य दिव्यौघगुरु स्तुत! गजाधिराज - वरप्रदाख्य सिद्धौघगुरुनुत!

विजय - दुर्जय - जय - दुःखारि - सुखावह - परमात्म - सर्वभूतात्म-महानन्द - फालचन्द्र - सद्योजात - बुद्धशूराख्यमानवौघ गुरुविनुत!

श्रीगुरु - श्रीपरमगुरु-श्रीपरमेष्ठिगुरुवन्दित श्रीश्रीपति-गिरिजागिरिजापति - रतिरतिपति - महीमहीपति परिवृत महालक्ष्मीमहागणपतिरूप! ऋद्ध्यामोद - समृद्धिप्रमोद -

कान्तिसुमुख-मदनावतीदुर्मुख - मदद्रवाऽविघ्न - द्राविणी-विघ्नकर्तृ - वसुधाराशङ्खनिधि - वसुमती पद्मनिधिभिरावृत !

हृदय - शिरः - शिखा - कवच - नेत्रत्रयास्त्रशक्ति समन्वित ! ब्राह्मी - माहेश्वरी - कौमारी - वैष्णवी - वाराही - माहेन्द्री - चामुण्डा - महालक्ष्मीसुसेवित

सायुधेन्द्राग्नि - यमनिरृऋति - वरुणवायु - सोमेशान परिवृत ! दन्त - पाशाङ्कुश - विघ्नपरशु - लड्डुकबीजा-पूराख्यसप्तमुद्राराध्य ! इक्षु - सक्तु - रम्भाफल - चिपिट - तिल - लाज - केल - मोदकाख्याष्टद्रव्यहविः प्रिय !

सुमुख ! एकदन्त ! कपिल ! गजकर्णक ! लम्बोदर ! विकट ! विघ्नराज ! विनायक ! धूमकेतो ! गणाध्यक्ष ! फालचन्द्र ! गजानन ! वक्रतुण्ड ! शूर्पकर्ण ! हेरम्ब ! स्कन्दपूर्वज !

गणञ्जय ! गणपते ! हेरम्ब ! धरणीधर ! महागणपते ! लक्षप्रद ! क्षिप्रप्रसादन ! अमोघसिद्धे ! अमित ! मन्त्र ! चिन्तामणे ! निधे ! सुमङ्गल ! बीज ! आशापूरक ! वरद ! शिव ! काश्यप ! नन्दन ! वाचासिद्ध ! ढुण्ढिविनायक !

क्षिप्रक्षेमकर ! क्षेमानन्द ! क्षोणीसुरद्रुम ! धर्मप्रद ! अर्थद ! कामदातः ! सौभाग्यवर्धन ! विद्याप्रद ! विभवद ! भुक्तिमुक्ति फलप्रद ! आभिरूप्यकर ! वीरश्रीप्रद ! विजयप्रद ! सर्ववश्यकर ! गर्भदोषहन् ! पुत्रपौत्रद ! मेधाद ! शोकहारिन् ! दौर्भाग्यनाशन ! प्रतिवादिमुखस्तम्भ ! रुष्टचित्तप्रसादन ! पराभिचारशमन ! दुःखभञ्जनकारक !

ओंकारवाच्य ! श्रीहृदय ! हृल्लेखामन्त्रमध्यग ! क्लींकार ! ग्लौंबीज ! गंगणेश्वर ! गणक्रीड ! नन्दिप्रिय ! परमात्मन् !

तत्त्वानां परम तत्त्व ! एकदन्त ! वरेण्य ! रत्नगर्भ ! वराहरदन ! रसप्रिय ! दन्तप्रभिन्नाभ्रमाल ! सर्वज्ञ ! वक्रतुण्ड ! जगदीश ! नन्दन ! मेघनाद ! वनमालिन् ! शतानन्द ! मातुलिङ्गधर ! नवाधारनिकेतन ! यशस्कर ! स्वाहाशक्ते ! बीजापूरगदेक्षुकार्मक - रुजाचक्राब्जपाशोत्पल - व्रीह्यग्र - स्वविषाणरत्नकलश-प्रोद्यत्कराम्भोरुह ! ज्वलद्भूषया सपद्मकरया वल्लभयाऽऽश्लिष्ट ! विश्वोत्पत्ति - विपत्ति - संस्थितिकर ! विघ्नेश ! इष्टार्थद !

श्रीमहागणपते ! स्वामिन् ! जय विजयी भव ! नमस्ते नमस्ते नमः !

शक्तिपञ्चाक्षरीमन्त्रजपः

अस्य श्रीशक्तिपञ्चाक्षरीमहामन्त्रस्य, वामदेव ऋषिः । अनुष्टुप् छन्दः । सांबपरमेश्वरो देवता । ह्रीं बीजं, नमः शक्तिः, शिवाय कीलकम् । सांबपरमेश्वरप्रीत्यर्थे जपे विनियोगः ।

करन्यासः - ओं ह्रां सर्वज्ञशक्तिधाम्ने अंगुष्ठाभ्यां नमः । नं ह्रीं नित्यतृप्तशक्तिधाम्ने तर्जनीभ्यां नमः । मं ह्रूं अनादिबोधशक्तिधाम्ने मध्यमाभ्यां नमः । शिं ह्रैं सर्वस्वतन्त्र शक्तिधाम्ने अनामिकाभ्यां नमः । वां ह्रौं नित्यमलुप्तशक्तिधाम्ने कनिष्ठिकाभ्यां नमः । यं ह्रः अनन्तशक्तिधाम्ने करतलकरपृष्ठाभ्यां नमः ॥

हृदयादिन्यासः - ओं ह्रीं सर्वज्ञशक्तिधाम्ने हृदयाय नमः । नं ह्रीं नित्यतृप्तशक्तिधाम्ने शिरसे स्वाहा । मं ह्रूं अनादिबोधशक्तिधाम्ने शिखायै वषट् । शिं ह्रैं सर्वस्वतन्त्रशक्तिधाम्ने कवचाय हुं । वां ह्रौं नित्यमलुप्तशक्तिधाम्ने नेत्रत्रयाय वौषट् । यं ह्रः अनन्त शक्तिधाम्ने अस्त्राय फट् ।

भूर्भुवस्सुवरों । (दिग्बन्धः) ध्यानम्-

मूले कल्पद्रुमस्य द्रुतकनकनिभं चारु पद्मासनस्थं
वामाङ्कारूढ गौरीनिबिडकुचभराभोगगाढोपगूढम् ।
नानालङ्कारकान्तं वरपरशुमृगाभीतिहस्तं त्रिणेत्रं
वन्दे बालेन्दुमौलिं गजवदन गुहाश्लिष्टपार्श्वं महेशम् ।

लमित्यादिपञ्चपूजा ।

मूलमन्त्रः - ओं ह्रीं नमः शिवायै ह्रीं नमः शिवाय (१०८-३३६) हृदयादिन्यासः । भूर्भुवस्सुवरों (दिग्विमोकः) ध्यानम् । लमित्यादिपञ्चपूजा ।

गुह्यातिगुह्यगोप्ता त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ।
इति जपं देवस्य वामहस्ते समर्पयेत् ।

श्रीविद्याषोडशीमन्त्रजपः

—ओं श्रीं ह्रीं क्लीं ग्लौं ग्लः हंसहंसोऽहं गणपतये स्वाहा । (१२)

—ओं श्रीं ह्रीं क्लीं औं सौः शरहणभव- रहणभवश - हणभवशर - णभवशरह - भवशरहण - वशरहणभ श्रीशरवणभवाय नमः । (१२)

—ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञानं ब्रह्म प्रयच्छ स्वाहा । (१२)

अस्य श्री महा त्रिपुरसुन्दरी महामन्त्रस्य, दक्षिणामूर्तिः ऋषिः । पङ्क्तिः छन्दः । श्रीमहात्रिपुरसुन्दरीदेवता । ऐं बीजं, सौः शक्तिः, क्लीं कीलकं, परब्रह्मानुसन्धानसिद्ध्यर्थे जपे विनियोगः ।

करन्यासः- ओं ह्रीं श्रीं अं मध्यमाभ्यां नमः । ओं ह्रीं श्रीं आं अनामिकाभ्यां नमः । ओं ह्रीं श्रीं सौः कनिष्ठिकाभ्यां नमः । ओं ह्रीं श्रीं अं अंगुष्ठाभ्यां नमः । ओं ह्रीं श्रीं आं तर्जनीभ्यां नमः । ओं ह्रीं श्रीं सौः करतल करपृष्ठाभ्यां नमः ।

चतुरासनन्यासः- ओं ह्रीं श्रीं ऐं क्लीं सौः देव्यासनाय नमः । (पादयोः) ओं ह्रीं ऐं क्लीं सौः चक्रासनाय नमः (जंघयोः) । ओं ह्रीं श्रीं ऐं क्लीं सौः सर्वमन्त्रासनाय नमः (जान्वोः) । ओं ह्रीं श्रीं क्लीं ब्लें साध्य सिद्धासनाय नमः (लिङ्गे) ।

हृदयादिन्यासः- ओं ह्रीं क्लीं ऐं सौः हृदयाय नमः । ओं ह्रीं श्रीं शिरसे स्वाहा । क ए ई ल ह्रीं शिखायै वषट् । हसकहलह्रीं कवचाय हुं । सकलह्रीं अस्त्राय फट् । सौः ऐं क्लीं ह्रीं श्रीं अस्त्राय फट् ।

भूर्भुवस्सुवरों (दिग्बन्धः-) । ध्यानं

बालार्कायुततेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं
नानालङ्कृतिराजमानवपुषं बालोडुराट् शेखराम् ।
हस्तैरिक्षुधनुः सृणिं सुमशरं पाशं मुदा बिभ्रतीं
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां भजे ॥

लमित्यादिपञ्चपूजा ।

मूलमन्त्रः- कएईलह्रीं हसकहलह्रीं सकलह्रीं श्रीं (१०८-३३६) हृदयादिन्यासः । ध्यानम् । भूर्भुवस्सुवरों (दिग्विमोकः ।) लमित्यादिपञ्च पूजा ।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेशि त्वत्प्रसादान्मयि स्थिरा ॥
देव्या वामहस्ते जपं समर्पयेत् ।

दक्षिणामूर्ति मूलमन्त्रः - ओं नमो भगवते श्रीदक्षिणामूर्तये मह्यं मेधां प्रज्ञानं ब्रह्म प्रयच्छ स्वाहा। (१२)

पञ्चाक्षरीकामकलाबालामन्त्र जपः

ध्यानं -

ह्रीङ्कारासनगर्भितानलशिखां शौक्लीं कला बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतान्तरङ्गां शिवाम्।
वन्दे पुस्तकमंकुशं जपवटीं पाशं मुदा बिभ्रतीं
त्वां बालां त्रिपुरां परात्परकलां षट्चक्रसञ्चारिणीम्॥

मूलमन्त्रः - ओं ईं ईं नमः। (१०८ वारं)

श्रीबालामन्त्रशापोद्धारः

(गुरोर्लब्धमन्त्रोपदेशः गुरोराज्ञया मन्त्रसिद्ध्यै क्रमानेताननुसरेत् प्रथमतः।)

१. शापोद्धारः - ओं ऐं ऐं सौः, क्लीं क्लीं ऐं, सौः सौः क्लीं इति शतवारं जपेत्।

२. उत्कीलनम्- ओं क्लीं नमः इति शतवारं जपेत्।

३. दीपनं- ओं ऐं वद वद वाग्वादिनि, क्लीं क्लिन्ने क्लेदिनि महाक्षोभं कुरु, ओं सौः मोक्षं कुरु इति शतवारं जपेत्।

४. प्रसादनं - ओं ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदय क्लेदय, क्षोभिणि क्षोभय, ऐं क्लीं सौः वैखरीं वर्धय वर्धय इति शतवारं जपेत्।

५. आह्लादनं- औं क्लीं नमः (१०८)

६. पुरश्चरणं - अक्षरलक्षं जपः, तद्दशांशहोमः, तद्दशांशतर्पणं, तद्दशांश ब्राह्मणभोजनमित्यादौ गुरोरादेशः प्रमाणम्।

श्रीत्र्यक्षरी बाला मन्त्र जपः।

अस्य श्रीबालात्रिपुरसुन्दरीमहामन्त्रस्य दक्षिणामूर्तिः ऋषिः (शिरसि)। पंक्तिश्छन्दः (मुखे) श्री बालात्रिपुरसुन्दरी देवता (हृदि) ऐं बीजं (गुह्ये, उरसो दक्षिणे भागे वा)। सौः शक्तिः (पादयोः उरसो वामे भागे वा)। क्लीं कीलकं (नाभौ हृन्मध्ये वा)। श्रीबालात्रिपुरसुन्दरीप्रीत्यर्थे जपे (पूजायां) विनियोगः।

करन्यासः - ऐं अंगुष्ठाभ्यां नमः। क्लीं तर्जनीभ्यां नमः। सौः मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। क्लीं कनिष्ठिकाभ्यां नमः। सौः करतल करपृष्ठाभ्यां नमः।

हृदयादिन्यासः - ऐं हृदयाय नमः। क्लीं शिरसे स्वाहा। सौः शिखायै वषट्। ऐं कवचाय हुं। क्लीं नेत्रत्रयाय वौषट्। सौः अस्त्राय फट्। भूर्भुवस्सुवरों (दिग्बन्धः।) ध्यानम्-

अरुण किरण जालैः रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता।
इतरवरकराढ्या फुल्लकल्हार संस्था
निवसतु हृदि बाला नित्यकल्याण शीला॥

(लमित्यादि पञ्च पूजाः) लं पृथिव्यात्मिकायै गन्धं समर्पयामि। हं आकाशात्मिकायै पुष्पाणि समर्पयामि। यं वाय्वात्मिकायै धूपमाघ्रापयामि। रं अग्न्यात्मिकायै दीपं दर्शयामि। वं अमृतात्मिकायै अमृतोपहारं निवेदयामि।

(सर्वत्र ब्रह्मप्रणवयोजना यथागुरूपदेशम्।)

मूलमन्त्रः- ओं ऐं क्लीं सौः । (१०८-३३६-१००८ वारं यथाशक्ति)

पुनः हृदयादिन्यासः । भूर्भुवस्सुवरों (दिग्विमोकः) ध्यानम्। लमित्यादि पञ्च पूजा।

जपसमर्पणम् -

गुह्यातिगुह्यगोप्त्री त्वं गृहाणात्मकृतं जपम्।
सिद्धिर्भवतु देवेशि त्वत्प्रसादान्मयि स्थिरा।।
इति देव्या वामकरे जपं समर्पयेत्।

(करांगन्यासेषु विशेषः- आं सौः क्लीं ऐं अंगुष्ठाभ्यां नमः । ईं सौः क्लीं ऐं तर्जनीभ्यां नमः । ऊं सौः क्लीं ऐं मध्यमाभ्यां नमः । ऐं सौः क्लीं ऐं अनामिकाभ्यां नमः । औंः सौः क्लीं ऐं कनिष्ठिकाभ्यां नमः । अः सौः क्लीं ऐं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ।

ध्याने विशेषः-

रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिणेत्राम्।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणां बुजस्थाम्।।
इत्यपि।)

बालाषडक्षरीमहामन्त्रजपः-

अस्य श्रीबाला त्रिपुरसुन्दरीमहामन्त्रस्य दक्षिणामूर्तिः ऋषिः । अनुष्टुप् छन्दः । श्री बालात्रिपुरसुन्दरी देवता । ओं ऐं बीजं, ओं सौः शक्तिः । ओं क्लीं कीलकम् । श्रीबालात्रिपुरसुन्दरी प्रसादसिद्ध्यर्थे जपे (पूजायां) विनियोगः ।

ओं ऐं ह्रीं श्रीं ऐं नमः (शिरसि)। ओं ऐं ह्रीं श्रीं क्लीं नमः (मुखे)। ओं ऐं ह्रीं श्रीं सौः नमः (भ्रूमध्ये)। ओं ऐं ह्रीं श्रीं सौः नमः (दक्षनेत्रे)। ओं ऐं ह्रीं श्रीं क्लीं नमः (वामनेत्रे)। ओं ऐं ह्रीं श्रीं ऐं नमः (हृदि) ओं ऐं ह्रीं श्रीं ऐं नमः (दक्षश्रोत्रे)। ओं ऐं ह्रीं श्रीं क्लीं नमः (वामश्रोत्रे।) ओं ऐं ह्रीं श्रीं सौः नमः (नाभौ)। ओं ऐं ह्रीं श्रीं सौः नमः (दक्षभुजे)। ओं ऐं ह्रीं श्रीं क्लीं नमः (वामभुजे)। ओं ऐं ह्रीं श्रीं ऐं नमः (पृष्ठे)। ओं ऐं ह्रीं श्रीं ऐं नमः (दक्षजानुनि) ओ ऐं ह्रीं श्रीं क्लीं नमः (वामजानुनि)। ओं ऐं ह्रीं श्रीं सौः नमः (मूलाधारे)

ऐं नमः (नाभ्यादिपादान्तम्)। क्लीं नमः (हृदयादिनाभ्यन्तम्)। सौः नमः (मूर्धादिहृदयान्तम्)। ऐं नमः (वामकरे) क्लीं नमः (दक्षिणकरे) सौः नमः (करयोः) ४ ऐं (पादयोः) ४ क्लीं (जान्वोः)। ४ सौः (कट्यां।) ४ सौः (नाभौ)। ४ क्लीं (कुक्षौ)। ४ ऐं (हृदये)। ४ ऐं (कण्ठे) ४ क्लीं (मुखे)। ४ सौः (ललाटे) ४ सौः (ब्रह्मरन्ध्रे)। ४ क्लीं (दक्षिणपार्श्वे)। ४ ऐं वामपार्श्वे।

ऐं नमः (मूर्ध्नि)। क्लीं नमः (गुह्ये)। सौः नमः (वक्षसि)। ऐं रत्यै नमः। (गुह्ये)। सौः प्रीत्यै नमः (हृदि)। क्लीं विजयायै (मनोभवायै) नमः (भ्रूमध्ये)। ऐं अमृतेश्यै नमः (गुह्ये)। सौः योगेश्यै नमः (हृदि)। क्लीं विश्वयोन्यै नमः (भ्रूमध्ये)। ह्रीं मनोभवाय नमः (शिरसि)। क्लीं मकरध्वजाय नमः (मुखे)। ऐं कन्दर्पाय नमः (हृदि)। ब्लूं मन्मथाय नमः (गुह्ये)। स्त्रीं कामदेवाय नमः। (चरणयोः)। द्रां द्राविण्यै नमः (शिरसि)। द्रीं क्षोभिण्यै नमः (पादयोः)। क्लीं वशीकरण्यै नमः (मुखे)। ब्लूं आकर्षिण्यै नमः (गुह्ये)। स्त्रीं संमोहिन्यै नमः (हृदि)।

चतुरासनन्यासः

ओं ऐं ह्रीं श्रीं ह्रीं क्लीं सौः देव्यात्मासनाय नमः (पादयोः)
ओं ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः। (जान्वोः)।
ओं ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः सर्वमन्त्रासनाय नमः।
(ऊरुमूले)
ओं ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः। (मूलाधारे)

करशुद्धिन्यासः- ओं ऐं ह्रीं श्रीं अं नमः (दक्षकरतले)। ओं ऐं ह्रीं श्रीं आं नमः (दक्षकरपृष्ठे)। ओं ऐं ह्रीं श्रीं सौः नमः (तत्पार्श्वयोः)। ओं ऐं ह्रीं श्रीं अं नमः (वामकरतले)। ओं ऐं ह्रीं श्रीं आं नमः (वामकरपृष्ठे)। ओं ऐं ह्रीं श्रीं सौः नमः (तत्पार्श्वयोः)। ओं ऐं ह्रीं श्रीं अं नमः (मध्यमां गुल्योः)। ओं ऐं ह्रीं श्रीं आं नमः (अनामिकयोः)। ओं ऐं ह्रीं श्रीं सौः नमः (कनिष्ठिकयोः)। ओं ऐं ह्रीं श्रीं अं नमः (अङ्गुष्ठयोः)। ओं ऐं ह्रीं श्रीं आं नमः (तर्जन्योः)। ओं ऐं ह्रीं श्रीं सौः नमः (करतल करपृष्ठयोः)। ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः बाले त्रिपुरसुन्दरि मां रक्ष रक्ष (हृदये)

करन्यासः- ओं ऐं अङ्गुष्ठाभ्यां नमः। ओं क्लीं तर्जनीभ्यां नमः। ओं सौः मध्यमाभ्यां नमः। ओं ऐं अनामिकाभ्यां नमः। ओं क्लीं कनिष्ठिकाभ्यां नमः। ओं सौः करतलकरपृष्ठाभ्यां नमः।

हृदयादिन्यासः- ओं ऐं हृदयाय नमः। ओं क्लीं शिरसे स्वाहा। ओं सौः शिखायै वषट्। ओं ऐं कवचाय हुं। ओं क्लीं नेत्रत्रयाय वौषट्। ओं सौः अस्त्राय फट्। भूर्भुवस्सुवरों (दिग्बन्धः)। ध्यानं

अरुणकिरणजालैः रञ्जिताशावकाशा
विधृत जपवटीका पुस्तकाभीतिहस्ता।
इतरवरकराढ्या फुल्लकल्हारसंस्था
निवसति हृदि बाला नित्यकल्याणशीला॥

लमित्यादिपञ्च पूजा।

मूलमन्त्रः- ओं ऐं क्लीं सौः सौः क्लीं ऐं। (१०८-३३६-वारं)

हृदयादिन्यासः । भूर्भुवस्सुवरों (दिग्विमोकः)। ध्यानम्। लमित्यादि पञ्चपूजा।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणात्मकृतं जपम्।
सिद्धिर्भवतु देवेशि त्वत्प्रसादान्मयि स्थिरा॥
इति देव्या वामहस्ते जपं समर्पयेत्॥

(ऐं सौः क्लीं इति शत्रुनाशाय, क्लीं ऐं सौः इति वशीकरणाय, क्लीं सौः ऐं इति मुक्त्यै जपः करणीय इति मन्त्र विदः केचित्। मूले उक्तक्रमेण जपात्सर्वसिद्धिरिति तत्त्वविदः।)

(जपे विशेषः- जपाङ्गत्वेन पूजा लमित्यादिना निर्वर्त्यते। पूजाङ्गत्वेन जपे क्रियमाणे मूलमन्त्रजपानन्तरं हृदयादिन्यासाद्युत्तराङ्गं अनुपदं न क्रियते । मूलमन्त्रजपानन्तरं मूलेन देवतामावाह्य बाह्यपूजां समाप्य अन्ते हृदयादिन्यासं दिग्बन्धं ध्यानं लमित्यादिपूजां यथाशक्ति पुनर्मन्त्रजपं हृदयादिन्यासं दिग्विमोकं ध्यानं लमित्यादि पूजां च कृत्वा देव्यै जपं समर्पयेत्।)

ध्यानं आवाहनं च

अरुणकिरणजालै रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता॥

इतरवरकराढ्या पुल्लकल्हारसंस्था
निवसति हृदि बाला नित्यकल्याणशीला॥

आमूलाधारात् आब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं परचितिमम्बां ध्यायामि। तत्तेजसि सावरणदेवतां बालां अम्बां क्रमेणाविर्भवन्तीं पश्यामि। तच्चरणयोरग्रे पुष्पपूरिताञ्जलिं सपर्योद्युक्तं आत्मानं भावयामि॥

अकुलेन्दुगलितामृतधारारूपिणीः सर्वावयवसुन्दरीः पञ्चभूताधिदेवताः देव्यग्रे पञ्चोपचारान् समर्पयन्तीः भावये। लंबीजा पृथिवी गन्धं समर्पयति। हंबीजः आकाशः पुष्पाणि समर्पयति। यंबीजो वायुः धूपमाघ्रापयति। रंबीजोऽग्निः दीपं दर्शयति। वं बीजो वरुणः अमृतोपहारं निवेदयति। सर्वा एता देवताः देव्यगेषु निलीनाः। अहमपि देवीपादारविन्दमूले निलीनः।

सर्वं ज्योतिर्मयं चिन्मयं विभाति। तेजोरूपेण परिणतां देवीं परचिद्रूपां सुषुम्नापथेन उद्गतां विनिर्भिन्नविधिबिल-विलसदमल-सहस्रदलकमलमागतां नासापुटेन निर्गच्छन्तीं त्रिखण्ड मुद्रामण्डित शिखण्डे कुसुमगर्भिते अञ्जलौ समानीय पूजाविग्रहे समायोजयामि।

## प्राणप्रतिष्ठा

अस्य श्रीप्राणप्रतिष्ठामहामन्त्रस्य, ब्रह्मविष्णुमहेश्वराः ऋषयः। ऋग्यजुःसामाथर्वाणि छन्दांसि। प्राणशक्तिः परा देवता। आं बीजं, ह्रीं शक्तिः क्रों कीलकम्। प्राणप्रतिष्ठार्थे विनियोगः। आं ह्रीं क्रों इति द्विरावृत्त्या करहृदयादिन्यासः। भूर्भुवस्सुवरों (दिग्बन्धः)। ध्यानम्-

रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान्।
बिभ्राणाऽसृक्कपालं त्रिनयन लसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।।

लमित्यादि पञ्च पूजा।

ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं, हं सः सोहं सोहं हंसः शिवः, बालाम्बायाः सपरिवारायाः प्राण इह प्राणः,जीव इह स्थितः । सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वा घ्राणप्राणापान व्यानोदानसमाना इहैवागत्य चिरं सुखं तिष्ठन्तु स्वाहा। सान्निध्यं कुर्वन्तु स्वाहा।

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्।
ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृडयानः स्वस्ति ।। क्रों ह्री आं।

आं ह्रीं क्रों क्रों ह्रीं आं (४० वारं) । प्राणशक्त्यै नमः । (धूपदीपनैवेद्यानि। योनिमुद्रया प्रणमेत्।) १० आवाहिता भव। १० स्थापिता भव। १० सन्निहिता भव। १० अवकुण्ठिता भव। १० देवि प्रसीद प्रसीद। (१० - ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः क्लीं ऐं।)

देवि सर्वजगन्नाथे यावद्बिम्बावसानकम्।
तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन् सन्निधिं कुरु ।।

कामेशाङ्कनिवासिन्याः कामेश्या अंकमास्थिता।
मम भाग्यवशाद्बाला सन्निधत्से चिदाकृतिः ।।

कामेश्वर्यंकनिलयां तरुणारुणसन्निभाम्।
अक्षस्रक्पुस्तकाभीतिवरदानलसत्कराम्।।

फुल्लकल्हारमध्यस्थां मन्दस्मितमुखीं शिवाम्।
कौसुम्बाम्बरसञ्छन्नपूगस्तनमनोहराम् ॥

काश्मीरकर्दमालिप्ततनुच्छायाविराजिताम्।
देवीसमानाकृतिकां दिव्याभरणभूषिताम्॥

बिन्दुत्रिकोणषट्कोण वृत्ताष्टदलयुग्मकैः।
भूपुराभ्यां च संयुक्ते चिच्चक्रे सुखमास्थिताम्।
देवीं प्रणौमि बालां त्वां नित्यकल्याणरूपिणीम्॥

## निर्गुण मानसपूजा

### १. पराभावनास्तोत्रम्-

ध्यायामि कथमिव त्वां धीवर्त्मविदूरदिव्यमहिमवतीम्।
आवाहनं विभोस्ते देवेशि कथं कुतः स्थानात्॥ १

कियदासनं प्रकल्प्यं कृतासनायाश्च सर्वतोऽपि शिवे।
पाद्यं कुतोऽर्घ्यमपि वाऽऽपाद्यं सर्वत्रपाणिपादायाः॥ २

आचमनं ते स्यादपि भगवति ननु सर्वतोमुखीनायाः।
मधुपर्को वा कथमिह मधुवैरिणि दर्शितप्रसादायाः॥ ३

स्नानेन किं विधेयं सलिलकृतेनेह नित्यशुद्धायाः।
वस्त्रेणापि न कार्यं कार्पासीयेन हेमवस्त्रायाः॥ ४

हैमैराभरणैर्वा चमत्कृतिः का हिरण्यवर्णायाः।
रत्नाचलवासिन्याः चिन्तामणिगेहगायास्ते॥ ५

गन्धवती हि तनुस्ते गन्धाः किं नेशि पौनरुक्त्याय।
पुष्करफलदानोत्कां पुष्करकुसुमेन पूजये किं त्वाम्॥ ६

शमधनमूलधनं त्वं सकलेश्वरि भवसि धूपिता केन।
दीपः कथं शिखावान् दीप्येत पुरः स्वयंप्रकाशायाः ।। ७

अमृतात्मकं निवेदितमशनं किं नाम नित्यतृप्तायाः ।
त्वय्याम्रेडितमेतत् ताम्बूलं यदिह सुमुखरागायाः ।। ८

उपहारीभूयादिदमुमेऽद्य यन्मे विचेष्टितमशेषम् ।
नीराजयामि विद्युन्निभां कथं वा चिदाभासाम् ।। ९

पुष्पाञ्जलिः कुतस्ते मूलप्रकृतिस्वरूपायाः ।
छत्रं नभोऽतिगायाः चामरमप्यविदितश्रमायास्ते ।। १०

नृत्यं प्रथतां कथमिव चित्रं भायान्महानटपुरन्ध्र्याः ।
गीतं किं कलभाषणजितवाणीमधुरवीणायाः ।। ११

वाद्यं डमरुभृदीशे वादयितुं तव पुरोऽस्ति का शक्तिः ।
अपरिच्छिन्नायास्ते जगदीश्वरि कः प्रदक्षिणविधिर्वा ।। १२

स्युस्ते नमांसि कथमिव शङ्करि परितोऽपि विद्यमानायाः ।
वाचामगोचरीं त्वां वाचः प्रसरैः प्रसादयेयं वा ।। १३

कस्मै वच्मि दशां मे कस्येदुग्घृदयमस्ति शक्तिर्वा ।
कस्य बलं चोद्धर्तुं क्लेशात्त्वामन्तरा दयासिन्धो ।। १४

याचे नाभिनवं ते चन्द्रापीडे मदम्ब किञ्चिदपि ।
मह्यं प्रदेहि भगवति मदीयमेव स्वरूपमानन्दम् ।। १५

भगवति बालतया वाऽभक्त्या वाप्यापदाकुलितया वा ।
मोहाविष्टतया वा मास्तु च ते मनसि यद्दुरुक्तं मे ।। १६

## आवरणदेवतासहित श्रीबालाध्यानम्

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः नमो भगवति बाले त्रिपुरसुन्दरि

इन्द्राग्नियम - निरृकृति - वरुण - वायु - कुबेरेशानशक्तिभिः सेविते सर्वाशा- परिपूरकचक्रस्वामिनि, अनङ्गकुसुमानङ्ग- मेखलानङ्गमदनानङ्गमदनातुरानङ्ग रेखानङ्गवेगिन्यनङ्गाङ्कुशा- नङ्गमालिनीभिः वशिनी - कामेश्वरी - मोदिनी - विमलारुणा - जयिनी - सर्वेश्वरी - कौलिनीभिश्च परिवृते सर्वसौभाग्यदायक- चक्रेशि, ब्राह्मी - माहेश्वरी - कौमारी - वैष्णवी - वाराही - माहेन्द्री - चामुण्डी - महालक्ष्म्याख्यमातृभिः असिताङ्ग - रुरु - चण्ड - क्रोधोन्मत्त - कपाल - भीषण - संहाराख्यभैरवैश्चोपा- सिते, सर्वार्थसाधकचक्रेशि, साकिनी - राकिणी - लाकिनी - काकिनी - डाकिनी - हाकिनी - याकिन्याख्ययोगिनीसंस्तुते सर्वरक्षाकरचक्रेशि, रति - प्रीति - विजयाख्यशक्तिभिः गुरु - परमगुरु - परमेष्ठिगुरुभिश्च पूजिते, सर्वसिद्धिप्रदचक्रेशि। हृदय - शिरश्शिखा - कवचनेत्रत्रयास्त्रशक्तिगुप्ते, सर्वानन्दमय- चक्राधिष्ठात्रि, श्रीशिवकामेश्वराङ्कस्थ कामेश्वर्यङ्क वासिनि, धृतवरदाभयमुद्रे पुस्तकजपमालाहस्ते अरुणे कल्हारसंस्थे श्रीबाले त्रिपुरसुन्दरि, परे भट्टारिके नमस्ते नमस्ते नमस्ते नमः सौः क्लीं ऐं श्रीं ह्रीं ऐं।

## त्रिशताक्षरी

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः क्लीं ऐं नमो बाले त्रिपुरसुन्दरि, हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि, अस्त्रदेवि, इन्द्रशक्ते, अग्निशक्ते, यमशक्ते, निरृकृतिशक्ते, वरुणशक्ते, वायुशक्ते कुबेरशक्ते ईशानशक्ते, वशिनि, कामेश्वरि, मोदिनि, विमले, अरुणे, जयिनि, सर्वेश्वरि, कौलिनि, अनंगकुसुमे, अनङ्गमेखले, अनङ्गमदने, अनंगमदनातुरे, अनंगरेखे, अनंगवेगिनि, अनंगाङ्कुशे, अनङ्गमालिनि, असिताङ्गभैरव -

रुरुभैरव - चण्डभैरव- क्रोधभैरव - उन्मत्तभैरव-, कपालभैरव- भीषणभैरव- संहारभैरव युते, ब्राहि, माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे, महालक्ष्मि, साकिनि, राकिणि, लाकिनि, काकिनि, डाकिनि, हाकिनि, याकिनि, गुरुमयि, परमगुरुमयि, परमेष्ठि गुरुमयि, रतिदेवि, प्रीतिदेवि, विजयादेवि, सावरणदेवते बाले परे भट्टारिके, नमस्ते नमः सौः क्लीं ऐं ओं ॥

नामस्मरणपूर्वकस्वरूपध्यानम्

कल्याणी त्रिपुरा बाला माया त्रिपुरसुन्दरी।
सुन्दरी सर्वसौभाग्यवती ह्रींकाररूपिणी ॥ १

ऐंकारी सर्वजननी क्लींकारी परमेश्वरी।
सौः कारी सर्वशक्त्याढ्या त्र्यक्षरी दिव्यगन्धिनी ॥ २

संविदानन्दलहरी श्रीविद्या त्रिपुरेश्वरी।
गुप्ता गुप्ततरा नित्या नित्याषोडशकावृता ॥ ३

भक्तानुरक्ता रक्ताङ्गी शिवा सर्वारुणा शुभा।
मोहिनी परमानन्दा कामेशी तरुणी कला ॥ ४

पद्मावती भगवती पद्मरागकिरीटिनी।
रक्तवस्त्रा रक्तभूषा रक्तगन्धानुलेपना ॥ ५

सौगन्धिकमिलद्वेणी मन्त्रिणी मन्त्रपुष्पिणी।
तत्त्वासना तत्त्वमयी सिद्धान्तः पुरवासिनी ॥ ६

श्रीवाणीड्या महादेवी कौलिनी परदेवता।
कैवल्यरेखा वशिनी सर्वेशी सर्वमङ्गला ॥ ७

नारायणी वेदवेद्या सर्वसम्पत्प्रदा सती।
चतुर्भुजा चन्द्रचूडा पुराणागमबोधिता ॥ ८

भूतेश्वरी भूतमयी पञ्चाशद्वर्णरूपिणी।
सर्वमङ्गलमाङ्गल्या कामाक्षी कामदायिनी ॥ ९

किङ्करीभूतगीर्वाणी सुधापानविनोदिनी।
आधारवीथीपथिका स्वाधिष्ठानसमाश्रिता ॥ १०

मणिपूरसमासीना अनाहतनिवासिनी।
विशुद्धिचक्रनिलया आज्ञाचक्रनिवासिनी ॥ ११

अष्टत्रिंशत्कलामूर्तिः सुषुम्नागारमध्यगा।
योगीश्वरमुनिध्येया परब्रह्मस्वरूपिणी ॥ १२

दिक्पालशक्तिसंयुक्ता सर्वाशापरिपूरका।
अनङ्गकुसुमादीड्या वाग्देव्यष्टकसंवृता ॥ १३

सर्वसौभाग्यदेशानी मात्रष्टकसमावृता।
भैरवाष्टकसंसेव्या सर्वाभीष्टार्थसाधिका ॥ १४

योगीनीषट्कसंसेव्या सर्वरक्षाकराधिपा।
रतिप्रीतिविजयाख्यत्रिशक्तिगुरुसेविता ॥ १५

सर्वसिद्धिप्रदेशानी सर्वानन्दमयाधिपा।
रहःपूजासमालोला बिन्दुस्थलमनोहरा ॥ १६

त्रिकोणमध्यनिलया षट्कोणपुरवासिनी।
वसुपत्रद्वयावासा भूपुरद्वयमध्यगा ॥ १७

शिवकामेश्वराङ्कस्थकामेश्वर्यङ्कवासिनी।
कामेश्वरीसमाकारा फुल्लकल्हारमध्यगा ॥ १८

पुस्तकाभीतिवरदजपमालालसत्करा।
तरुणारुणदेहाभा दिव्याभरणभूषिता ॥ १९

बन्धूककुसुमप्रख्या बाललीलाविनोदिनी।
काश्मीरकर्दमालिप्ततनुच्छायाविराजिता ॥ २०

सपर्याचारनिरतगुरुमण्डलसेविता।
चतुर्वर्गप्रदानोत्क नित्यकल्याणरूपिणी ॥ २१

एवं ध्याता हृदि सदा पराम्बा बालरूपिणी।
देवि ! भाग्यवशादत्र सन्निधत्से चिदाकृतिः ॥ २२

सगुणमानसपूजा

प्रबोधनम्

१०[1]. उषसि मागधमङ्गलगायनैः झटिति जागृहि जागृहि जागृहिं।
अतिकृपार्द्रकटाक्षनिरीक्षणैः जगदिदं जगदम्ब सुखीकुरु ॥

मण्डपप्रवेशः

१० कनकमयवितर्दिशोभमानं दिशिदिशि पूर्णसुवर्णकुम्भयुक्तम्।
मणिमयमण्डपमध्यमेहि मातः मयि कृपयाशु समर्चनं ग्रहीतुम् ॥

कनकमयवितर्दिस्थापिते तूलिकाढ्ये
विविधकुसुमकीर्णे कोटिबालार्कवर्णे।
भगवति रमणीये रत्नसिंहासनेऽस्मिन्
उपविश पदयुग्मं हेमपीठे निधाय ॥

1. १०- ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः क्लीं ऐं इत्यस्य सङ्केतः।

पाद्यम्

१०. दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम्।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥

अर्घ्यम्

१०. गन्धपुष्पयव सर्षपदूर्वा संयुतं तिलकुशाक्षतमिश्रम्।
हेमपात्रनिहितं सहरत्नैः अर्घ्यमेतदुररीकुरु मातः ॥

आचमनम्

१०. जलजद्युतिना करेण जातीफलतक्कोललवङ्गगन्धमिश्रैः।
अमृतैरमृतैरिवातिशीतैः भगवत्याचमनं विधीयताम् ॥

मधुपर्कः

१०. निहितं कनकस्य संपुटे पिहितं रत्नपिधानकेन यत्।
तदिदं जगदम्ब तेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥

स्नानम्

१०. एतच्चम्पकतैलमम्ब विविधैः पुष्पैर्मुहुर्वासितं
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम्।
सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं ते मया
केशेषु भ्रमरभ्रमेषु सकलेष्वंगेषु चालिप्यते ॥

मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं
भक्त्याहं कलयामि हेमरजसा संमिश्रितं केसरैः।
केशानामलकैर्विशोध्य विशदान्कस्तूरिकोदञ्चितैः
स्नानं ते नवरत्नकुम्भसहितैः संवासितोष्णोदकैः ॥

दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः।
स्नपयामि तवाहमादराज्जननि त्वां पुनरुष्णवारिभिः॥

एलोशीरसुवासितैः सकुसुमैर्गङ्गादितीर्थोदकैः
माणिक्यामलमौक्तिकामृतरसैः स्वच्छैः सुवर्णोदकैः।
मन्त्रान्वैदिकतान्त्रिकान्परिपठन् सानन्दमत्यादरात्
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु॥

## वस्त्रधारणम्-केशप्रसाधनं च

१०. बालार्कद्युति दाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम्।
मुक्ताभिर्ग्रथितं सुकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु॥

१०. बहुभिरगरुधूपैः सादरं धूपयित्वा
भगवति तव केशान्कङ्कतैर्मार्जयित्वा।
सुरभिभिररविन्दैश्चम्पकैश्चर्चयित्वा
झटिति कनकसूत्रैर्जूटयन्वेष्टयामि॥

## आभरणभूषणम्

१०. मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले।
केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमात्
ताटंके तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम्॥

धम्मिल्ले तव देवि हेमकुसुमान्याधाय फालस्थले
मुक्ताराजिविराजमानतिलकं नासापुटे मौक्तिकम्।

मातर्मौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः
कट्यां काञ्चनकिंकिणीर्विनिदधे रत्नावतंसं श्रुतौ ।।

गन्धकुङ्कुमाक्षतधारणम्

(१०) मातः फालतले तवातिविमले काश्मीरकस्तूरिका-
कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पद्रवं
पादौ चन्दनलेपनादिभिरहं पंपूजयामि क्रमात् ।।

(१०) रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः ।
अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्कांकिततण्डुलैर्वा ।।

(१०) सीमन्ते ते भगवति मया सादरं न्यस्तमेतत्
सिन्दूरं मे हृदयकमले हर्षवर्षं तनोति ।
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिः
अन्तर्ध्वान्तं हरति सकलं चेतसा चिन्तयैव ।।

पुष्पालङ्करणम्

१०. मन्दारकुन्दकरवीरलवङ्गपुष्पैः
त्वां देवि सन्ततमहं परिपूजयामि ।
जातीजपा वकुल चम्पककेतकादि-
नानाविधानि कुसुमानि च तेऽर्पयामि ।।

मालतीवकुलहेमपुष्पिका काञ्चनारकरवीरकैतकैः ।
कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः ।।

पारिजातशतपत्रपाटलैर्मल्लिकावकुलचम्पकादिभिः ।
अम्बुजैः सकुसुमैश्च सादरं पूजयामि जगदम्ब ते वपुः ।।

धूपः

१०. लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः
कर्पूराकलितैः शिरैर्मधुयुतैर्गोसर्पिषा लोडितैः।
श्रीकण्ठागरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु॥

दीपः

१० रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषा लोडितैः
दीपैर्दीर्घतरान्धकारभिदुरैः बालार्ककोटिप्रभैः।
आताम्रज्वलदुज्ज्वलप्रविलसद्रत्नप्रदीपैस्तथा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः॥

निवेदनम्

१० मातस्त्वां दधि दुग्धपायस महाशाल्यन्नसन्तानिका-
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः।
एलाजीरकहिङ्गुनागर निशाकुस्तुम्भरीसंस्कृतैः
शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्चयन्॥

सापूपसूप दधि दुग्ध सुधा घृतानि
सुस्वादु भक्त परमान्न पुरस्सराणि।
शाकोल्लसन्मरिचजीरक बाह्लिकानि
भक्ष्याणि भुंक्ष्व जगदम्ब मयार्पितानि॥

क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु।
मातरेतदमृतोपमं पयः संभ्रमेण परिपीयतां मुहुः॥

उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन॥

अतिशीतमुशीरवासितं तपनीये कलशे निवेशितम् ।
पटपूतमिदं जितामृतं शुचि गङ्गाजलमम्ब पीयताम् ।।

जंब्वाम्ररम्भाफलसंयुतानि द्राक्षाफलक्षौद्रसमन्वितानि ।
सनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ।।

कूष्माण्डकोशातकिसंयुतानि जम्बीरनारङ्ग समन्वितानि ।
सबीजपूराणि सबादराणि फलानि ते देवि समर्पयामि ।।

ताम्बूलम्

१० कर्पूरेण युतैर्लवङ्गसहितैस्तक्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ।
मातः कैतकपत्रपाण्डुरुचिभिस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनार्थमतुलं ताम्बूलमङ्गीकुरु ।।

गोधूमदीपाराधनम्

१० सविनयमथ दत्वा जानुयुग्मं धरण्यां
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ।
मुखकमलसमीपे तेऽम्ब सार्धं त्रिवारं
भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ।।

स्वर्ण-मन्त्रपुष्पाञ्जलिः

१० अथ बहुमणिमिश्रैः मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा
कनककमलमालां कण्ठदेशेऽर्पयित्वा।
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते
हृदयकमलमध्ये देवि हर्षं तनोतु॥

स्तोत्रम्

१० तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः।
तदिहैकमुखेषु स्तवनं कस्तव कर्तुमीश्वरः॥

रात्रिसूक्तम्

ॐ रात्री व्यख्यदायती पुरुत्रा देव्य१ क्षभिः। विश्वा अधि श्रियोधित॥ १॥ ओर्वप्रा अमर्त्या निवतो देव्यु१ द्वतः। ज्योतिषा बाधते तमः॥ २॥ निरु स्वसारमस्कृतोषसं देव्यायती। अपेदुहासते तमः॥ ३॥ सा नो अद्य यस्या वयं नि ते यामन्न विक्ष्महि। वृक्षेन वसतिं वयः॥ ४॥ निग्रामासो अविक्षत निपद्वन्तो निपक्षिणः। निश्येनासश्चिदर्थिनः॥ ५॥ यावया वृक्य (अं) वृकं यवयस्तेनमूर्म्ये। अथा नः सुतरा भव॥ ६॥ उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित। उप ऋणेव यातय॥ ७॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः। रात्रि स्तोमं न जिग्युषे॥ ८॥

देवीसूक्तम्

ॐ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥ १॥ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्॥ अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते॥ २॥ अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्। तां मा देवा

व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥ मया सोऽअन्नमत्ति यो विपश्यति यः प्राणिति यईं शृणोत्युक्तम् । अमन्तवोमान्त उपक्षियन्ति श्रुधिश्रुत श्रद्धिवंते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवेहन्त वा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ॥ ६ अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व (१) न्तः समुद्रे । ततो वितिष्ठे भुवनानु विश्वो तामूं द्यां वर्ष्मणोपस्पृशामि ॥ ७ ॥ अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा । परो दिवा परएना पृथिव्यै तावती महिना संबभूव ॥ ८ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

## श्रीदेव्यथर्वशीर्षम्

ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति ॥ १ ॥ साब्रवीत्— अहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगत् । शून्यं चाशून्यं च ॥ २ ॥ अहमानन्दानानन्दाः । अहं विज्ञानाविज्ञाने । अहं ब्रह्माब्रह्मणी वेदितव्ये । इत्याथर्वणी श्रुतिः । अहं पञ्चभूतान्यपञ्चभूतानि । अहमखिलं जगत् ॥ ३ ॥ वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् ॥ ४ ॥

अहं रुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणावुभौ बिभर्मि । अहमिन्द्राग्नी अहमश्विनावुभौ ॥ ५ ॥ अहं सोमं त्वष्टारं पूषणं भगं दधामि । अहं विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ६ ॥ अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते । अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी

प्रथमा यज्ञियानाम्। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे। य एवं वेद। स दैवीं सम्पदमाप्नोति।। ७।।

ते देवा अब्रुवन्— नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्।। ८।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशयते तमः ।। ९ ।। देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ।। १० ।। कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् । सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्।। ११ ।। महालक्ष्म्यै च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवी प्रचोदयात्।। १२ ।।

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ।। १३ ।। कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमातादिविद्योम्।। १४ ।।

एषाऽऽत्मशक्तिः । एषा विश्वमोहिनी । पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या। य एवं वेद स शोकं तरति।। १५ ।। नमस्ते अस्तु भगवति मातरस्मान् पाहि सर्वतः ।। १६ ।।

सैषाष्टौ वसवः। सैषैकादश रुद्राः। सैषा द्वादशादित्याः। सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः। सैषा सत्त्वरजस्तमांसि। सैषा ब्रह्मविष्णुरुद्ररूपिणी । सैषा प्रजापतीन्द्रमनवः । सैषा ग्रहनक्षत्रज्योतींषि। कलाकाष्ठादिकालरूपिणी। तामहं प्रणौमि

नित्यम् ।। पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् । अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ।। १७ ।। वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ।। १८ ।। एवमेकाक्षरं ब्रह्म यतयः शुद्धचेतसः । ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ।। १९ ।।

वाङ्माया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितम् । सूर्योऽवामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः । नारायणेन सम्मिश्रो वायुश्चाधरयुक् ततः । विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ।। २०

हृत्पुण्डरीकमध्यस्थां प्रातः सूर्यसमप्रभाम् । पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ।। त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ।। २१ ।।

नमामि त्वां महादेवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ।। २२

यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते अज्ञेया । यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता । यस्या लक्ष्यं नोपलक्ष्यते तस्मादुच्यते अलक्ष्या । यस्या जननं नोपलभ्यते तस्मादुच्यते अजा । एकैव सर्वत्र वर्तते तस्मादुच्यते एका । एकैव विश्वरूपिणी तस्मादुच्यते नैका । अत एवोच्यते अज्ञेयानन्तालक्ष्याजैका नैकेति ।। २३ ।।

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी । ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी । यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।। २४ ।। तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् । नमामि भवभीतोऽहं संसारार्णवतारिणीम् ।। २५ ।।

इदमथर्वशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमाप्नोति । इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति— शतलक्षं प्रजप्त्वापि सोऽर्चासिद्धिं न विन्दति । शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः । दशवारं पठेद् यस्तु सद्यः पापैः प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः ।। २६ ।।

सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानो अपापो भवति । निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति । स महामृत्युं तरति य एवं वेद । इत्युपनिषत् ।। २७

श्रीबालास्तोत्रम् १.

बालाम्बेति सुधापूरमाधुरीचोरमम्बिके ।
तव नामास्ति यत्तेन जिह्वा मे मधुमत्तमा ।।

जगत्पवित्रि मामिकामपाहराशु दुर्जराम् ।
प्रसीद मे दयाधुने प्रशास्तिमम्ब नस्कृधि ।।

सन्ति विद्या जगत्यस्मिन् संसारभ्रमहेतवः ।
भजेऽहं त्वां यया विद्वान् विद्ययाऽमृतमश्नुते ।।

कुर्वे गर्वेणापचारानपारान् यद्यप्यम्ब त्वत्पदाब्जं तथापि ।
मन्ये धन्ये देवि विद्यावलम्बं मातेव पुत्रं बिभृतास्त्वेनम् ।।

यथोपास्तिक्षतिर्न स्यात्तव चक्रस्य सुन्दरि ।
कृपया कुरु कल्याणि तथा मे स्वस्तिरायुषी ।।

सुकुमारे सुखाकारे सुनेत्रे सूक्ष्ममध्यमे।
सुप्रसन्ना भव शिवे सुमृडीका सरस्वती॥

नवनीपवनीवास लालसोत्तरमानसे।
शृङ्गारदेवते मातः श्रियं वासय मे कुले॥

वन्दे मातरमम्बिकां भगवतीं वाणीरमासेवितां
कल्याणीं कमनीयकल्पलतिकां कैलासनाथप्रियाम्।
वेदान्तप्रतिपाद्यमानविभवां विद्वन्मनोरञ्जनीं
श्रीचक्राश्रितचक्रपीठनिलयां श्रीराजराजेश्वरीम्॥

कुन्दमुकुलाग्रन्तां कुङ्कुमपङ्केन लिप्ततनुमध्याम्।
आरक्तदेहकान्तिं बालामखिलाण्डनायिकां वन्दे॥

ऐंकारासन गर्भितानलशिखां शौक्लीं कला बिभ्रतीं
सौवर्णांबरधारिणीं वरसुधाधौतान्तरङ्गां शिवाम्।
वन्दे पुस्तमङ्कुशं जपवटीं पाशं मुदा बिभ्रतीं
त्वां बालां त्रिपुरां परात्परकलां षट्चक्रसञ्चारिणीम्॥

बालार्कायुततेजसं त्रिणयनां रक्ताम्बरोल्लासिनीं
नानालङ्कृतिराजमानवपुषं बालोडुराट्शेखराम्।
हस्तैरिक्षुधनुः सृणिं सुमशरं पाशं मुदा बिभ्रतीं
श्रीचक्रस्थित सुन्दरीं त्रिजगतामाधारभूतां भजे॥

## श्रीबालास्तोत्रम् २

वरदाभयपुस्तकाक्षमालाविलसत्पाणिसरोजभासमानाम्।
शरदिन्दुसहस्रकोटितुल्यां परमानन्दमयीं प्रणौमि बालाम्॥

करुणैकनिधिं विशालनेत्रां नलिनीपल्लवचारु पाणिपादाम्।
निखिलागमवेद्यदिव्यरूपां परमानन्दमयीं प्रणौमि बालाम्॥

अरुणाभतनुं सुमन्दहासां कमलामोदमुखीं रवीन्दुभासाम्।
शरणागतरक्षणाधिकाशां परमानन्दमयीं प्रणौमि बालाम्॥

तिलकोदितफालदिव्यशोभां कबरीभारविलासि निर्मलास्याम्।
कुसुमोदयकन्दलोलभृङ्गां परमानन्दमयीं प्रणौमि बालाम्॥

रमणीयतरांशुकांशुदीप्तां नवकाञ्चीमणिदीप्तिमच्चितम्बाम्।
विमलानघरत्नहारभारां परमानन्दमयीं प्रणौमि बालाम्॥

चरणामलहंसकाभिरामां पदपङ्केरुहनम्रसर्वदेवाम्।
कुलिशाङ्कुशपङ्कजाङ्घ्रिपद्मां परमानन्दमयीं प्रणौमि बालाम्॥

नवयौवनचारुभावलीलां घनताटङ्कविकासिकर्णपूराम्।
मणिमौक्तिकनासिकाभिरामां परमानन्दमयीं प्रणौमि बालाम्॥

परवाग्भवमन्मथादिमध्यां विमलाङ्गां सितपङ्कजे निषण्णाम्।
विविधाकृतिवेद्यमूलरूपां परमानन्दमयीं प्रणौमि बालाम्॥

रक्तवस्त्रपरीधानां फुल्लकल्हारहस्तकाम्।
देवीं प्रणौमि तां बालां नित्यकल्याणरूपिणीम्॥

श्रीबालास्तोत्रम् ३

उदञ्चद्दिनेशप्रपञ्चप्रकाशां
उदूढेन्दुरेखामुदारां त्रिणेत्राम्।
वहन्तीं वराभीतिकोशाक्षमालाः
वसन्तीं स्फुटे पद्मके नौमि बालाम्॥

नतानां जनानां समस्तर्धिदात्रीं
सुयोन्याख्यमुद्राभिगम्यां शरण्याम्।
सुवाक्कामशक्त्याख्यबीजत्रयान्तः
स्थितां बालिकां त्वां नमामि स्मरामि॥

लसद्रक्तसिन्दूरवर्णां कराब्जैः
वराभीतिपुस्ताक्षमाला दधानाम्।
सिताधेन्दुफालां वरेण्यां त्रिनेत्रां
शिवां बालिकां त्वां नमामि स्मरामि ।।

कुन्दमुकुलाग्रदन्तां कुङ्कुमपङ्केन लिप्ततनुमध्याम्।
आरक्त देह कान्तिं बालामखिलाण्डनायिकां वन्दे ।।

मालासृणीपुस्तकपाशहस्तां बालां भजेऽहं ललिताकुमारीम्।
कुमारकामेश्वर केलिलोलां नमामि गौरीं नववर्षदेश्याम्।।

साक्षस्रजं च वरदाभय पुस्तकोद्यद्-
बाहामयुग्मनयनां अमलाब्जसंस्थाम्।
अच्छाङ्गरागवसनापघनां नमामि
बालेन्दुमौलिमनिशं वचसामधीशाम्।।

वाञ्छादात्रीस्तोत्रम्

ऐं विद्याक्षमालासुकपालमुद्राराजत्करां कुन्दसमानकान्तिम्।
मुक्ताफलालङ्कृतशोभनाङ्गीं बालां भजे वाङ्मयसिद्धिहेतोः ।।

क्लीं भजे कल्पवृक्षाध उद्दीप्तरत्नासने सन्निषण्णां मदाघूर्णिताक्षीम्।
करैर्बीजपूरं कपालेषुचापं सपाशाङ्कुशं रक्तवर्णां दधानाम्।।

सौः व्याख्यानमुद्रामृतकुम्भविद्यां अक्षस्रजं सन्दधतीं कराब्जैः ।
चिद्रूपिणीं शारदचन्द्रकान्तिं बालां भजे मौक्तिकभूषिताङ्गीम्।।

पाशाङ्कुशौ पुस्तकमक्षसूत्रं करैर्दधानां सकलामरार्च्याम्।
रक्तां त्रिणेत्रां शशिशेखरां तां भजेऽखिलर्ध्यै त्रिपुरां च बालाम्।।

आरक्तां शशिखण्डमण्डितजटाजूटानुबद्धस्रजं
बन्धूकप्रसवारुणाम्बरधरां रक्ताम्बुजाध्यासिनीम्।

त्वां ध्यायामि चतुर्भुजां त्रिणयनामापीनरम्यस्तनीं
मध्ये निम्नवलित्रयाङ्कितततनुं त्वद्रूपसम्पत्तये ॥

आधारे तरुणार्कबिम्बरुचिरं सोमप्रभं वाग्भवं
बीजं मान्मथमिन्द्रगोपक निभं हृत्पङ्कजे संस्थितम् ।
रन्ध्रे ब्रह्मपदे च शाक्तमपरं चन्द्रप्रभाभासुरं
ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सूक्ष्मं पदम् ॥

रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिणेत्राम् ।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम् ॥
अकलङ्क शशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तलसद्बाहा पातु मां परमा कला ॥

मातुलिङ्गपयोजन्महस्तां कनकसन्निभाम् ।
पद्मासनगतां बालां ध्यायामि धनसिद्धये ॥

वरपीयूषकलशपुस्तकाभीतिधारिणीम् ।
सुधां स्रवन्तीं ज्ञानाप्त्यै ब्रह्मरन्ध्रे विचिन्तये ॥

शुक्लाबरां शशाङ्काभां ध्यायाम्यारोग्यदायिनीम् ।
सृणिपाशधरां देवीं रत्नालङ्कारभूषिताम् ॥
अकारादिक्षकारान्तवर्णावियव शालिनीम् ।
प्रसन्नामरुणामीक्षे सौमनस्यप्रदां शिवाम् ॥

पुस्तकजपवटहस्ते वरदाभयचिह्नबाहुलते ।
कर्पूरामलदेहे वागीश्वरि चोदयाशु मम चेतः ॥

## रक्षास्तोत्रम्

सर्वलोकैकजनके सर्वाभीष्टफलप्रदे ।
रक्ष मां क्षुद्रजालेभ्यः पातकेभ्यश्च सर्वदा ॥

जगद्धिते जगन्नेत्रि जगन्मातर्जगन्मये ।
जगद्दुरितजालेभ्यो रक्ष मामहितं हर ॥

वाङ्मनः कायकरणैर्जन्मान्तरशतार्जितम् ।
पापं नाशय देवेशि पाहि मां कृपयाऽनिशम् ॥

जन्मान्तरसहस्रेषु यत्कृतं दुष्कृतं मया ।
तन्निवारय मां पाहि शरण्ये भक्तवत्सले ॥

मया कृतान्यशेषाणि मदीयैश्च कृतानि च ।
पापानि नाशयस्वाद्य पाहि मां परदेवते ॥

ज्ञानाज्ञानकृतैः पापैः संप्राप्तं दुरितं क्षणात् ।
निवारय जगन्मातरखिलैरनिवारितम् ॥

असत्कार्य निवृत्तिं च सत्कार्यस्य प्रवर्तनम् ।
देवतात्मानुसन्धानं देहि मे परमेश्वरि ॥

सर्वावरणविद्यानां सन्धानेनानुचिन्तनम् ।
देशिकाङ्घ्रिस्मृतिं चैव देहि मे जगदीश्वरि ॥

अनुस्यूतरपरब्रह्मानन्दामृतनिषेवणम् ।
अत्यन्तनिश्चलं चित्तं देहि मे परमेश्वरि ॥

सदाशिवाद्यैर्धात्र्यन्तैः देवताभिर्मुनीश्वरैः ।
उपासितं पदं यत्तद्देहि मे परमेश्वरि ॥

इन्द्रादिभिरशेषैश्च देवैरसुरराक्षसैः ।
कृतं विघ्नं निवार्याशु कृपया रक्ष रक्ष माम् ॥

आत्मानमात्मनः स्निग्धं आश्रितं परिचारकम् ।
द्रव्यदं बन्धुवर्गं च देवेशि परिरक्ष नः ॥

उपासकस्य यो यो मे यथाशक्त्यनुकूलकृत्।
सुहृदं रक्ष तं नित्यं द्विषन्तमनुकूलय॥

दैहिकादैहिकान्मानाहेतुकात्केवलाद्भयात्।
पाहि मां प्रणतापत्तिभञ्जने विश्वलोचने॥

नित्यानन्दमयं सौख्यं निर्मलं निरुपाधिकम्।
देहि मे निश्चलां भक्तिं निखिलाभीष्ट सिद्धिदे॥

यन्मया सकलोपायैः करणीयमितः परम्।
तत्सर्वं बोधयस्वाम्ब सर्वलोकहिते रते॥

प्रदेहि बुद्धियोगं तं येन त्वामुपयाम्यहम्।
कामानां हृद्यसंरोहं देहि मे कृपयेश्वरि॥

भवाब्धौ पतितं भीतमनाथं दीनमानसम्।
उद्धृत्य कृपया देवि निधेहि चरणाम्बुजे॥

## श्री बालाकवचम्

वन्दे सिन्दूरवदनां तरुणारुण सन्निभाम्।
अक्षस्रक्पुस्तकाभीतिवरदानलसत्कराम्॥
फुल्लपङ्कजमध्यस्थां मन्दस्मितमनोहराम्।
दशाभिर्वयसा हारियौवनाचार रञ्जिताम्।
काश्मीरकर्दमालिप्ततनुच्छाया विराजिताम्॥

वाग्भवः पातु शिरसि कामराजस्तथा हृदि।
शक्तिबीजं सदा पातु नाभौ गुह्ये च पादयोः॥

ब्रह्माणी पातु मां पूर्वे दक्षिणे पातु वैष्णवी।
पश्चिमे पातु वाराही उत्तरे तु महेश्वरी॥

आग्नेय्यां पातु कौमारी महालक्ष्मीश्च निरृऋतौ।
वायव्यां पातु चामुण्डी इन्द्राणी पातु चैश्वरे॥

अधश्चोर्ध्वं च प्रसूता पृथिव्यां सर्वमङ्गला।
ऐंकारिणी शिरः पातु क्लींकारी हृदयं मम॥

सौः पातु पादयुग्मं मे सर्वाङ्गं सकलाऽवतु।
ओं वाग्भवी शिरः पातु पातु फालं कुमारिका॥

भ्रूयुग्मं शङ्करी पातु श्रुतियुग्मं गिरीश्वरी।
नेत्रे त्रिणेत्रवरदा नासिकां मे महेश्वरी॥

औष्ठौ पूगस्तनी पातु चिबुकं दशवार्षिकी।
कपोलौ कमनीयाङ्गी कण्ठं कामार्चितावतु॥

बाहू पातु वराभीतिधारिणी परमेश्वरी।
वक्षः प्रदेशं पद्माक्षी कुचौ काञ्चीनिवासिनी॥

उदरं सुन्दरी पातु नाभिं नागेन्द्रवन्दिता।
पार्श्वे पशुत्वहरिणी पृष्ठं पापविनाशिनी॥

कटिं कर्पूरविद्येशी जघनं ललिताम्बिका।
मेढ्रं महेशरमणी पातूरू फाललोचना॥

जानुनी जयदा पातु गुल्फौ विद्याप्रदायिनी।
पादौ शिवार्चिता पातु प्रपदौ त्रिपदेश्वरी॥

सर्वाङ्गं सर्वदा पातु मम त्रिपुरसुन्दरी।
वित्तं वित्तेश्वरी पातु पशून्पशुपतिप्रिया॥
पुत्रान्पुत्रप्रदा पातु धर्मान्धर्मप्रदायिनी॥

क्षेत्रं क्षेत्रेशवनिता गृहं गम्भीरनादिनी।
धातून्धातुमयी पातु सर्वं सर्वेश्वरी मम॥

रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु।
तत्सर्वं रक्ष मे देवि बाले त्वं पापनाशिनी ॥

प्रदक्षिणम्

१० पदे पदे यत्परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति।
तत्सर्वपापक्षयहेतुभूतं प्रदक्षिणं ते परितः करोमि ॥

नमस्कारः

१० रक्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम्।
अशेषबृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

शरणागतदीनार्तपरित्राण परायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥

आत्मार्पणम्

१० विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते संनिधिं
प्राप्तं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु।
चित्तं त्वत्पदभावने व्यभिचरेत् दृग्वाक् च मे जातु चेत्
तत्सौम्ये स्वगुणैर्बधान न यथा भूयो विनिर्गच्छति ॥

त्वत्प्रसूतस्त्वदाज्ञप्तस्त्वद्दासस्त्वत्परायणः ।
त्वन्नामचिन्तनपरस्त्वदर्थेऽहं नियोजितः ॥

त्वयार्जितमिदं सर्वं तव स्वं परमेश्वरि।
त्वदधीनं करोमीह त्वदर्थे तन्नियोजय।

तव देवि वशे वर्ते तवाज्ञामेव पालयन् ॥

त्वं मातापितरौ त्वमेव सुहृदस्त्वं भ्रातरस्त्वं सखा
त्वं विद्या त्वमुदारकीर्तिचरितं त्वं भाग्यमत्यद्भुतम् ।
किं भूयः सकलं त्वदीहितमिति ज्ञात्वा कृपाकोमले
श्रीविद्येश्वरि सम्प्रसीद शरणं मातः परं नास्ति मे ॥

शान्तिप्रार्थना

माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् ।
अनिराकरणं मेऽस्तु अनिराकरणं मम ॥

स्वाविद्यैकनिबद्धोऽकरवं कर्माणि मुह्यमानः सन् ।
दैवाद्विधूतबन्धः स्वात्मज्ञानान्मुनिः स्यां वा ॥

मायावशेन सुप्तो मध्येऽपश्यं सहस्रशः स्वप्नान् ।
देशिकवचः प्रबुद्धो दीव्येयं मोदवारिधौ किं वा ॥

जनिविपरीतक्रमतो बुद्ध्या प्रविलाप्य पञ्चभूतानि ।
परिशिष्टमात्मतत्वं पश्येयं वा मुनिः शान्तः ॥

जगदखिलमिदमसारं मायिकमेवेति मनसि मननेन ।
पर्यटनपाटिताशः प्रगलितमदमत्सरः स्यां वा ॥

त्वमहमभिमान विहीनो मोदितनानाजनाचारः ।
बालाचरितः स्यां वा विमलसुखाम्भोनिधौ मग्नः ॥

अवधूतकर्मजालो जडबधिरान्धोपमाचारः ।
आत्मारामो यतवाक् अकुतश्चनवसतिरासीय ॥

चपलं मनः कुरङ्गं चारु निगृह्णन्विमर्शवागुरया ।
निगमारण्यविहारश्रान्तं शान्तं विदध्यां वा ॥

सन्त्यज्य शास्त्रवार्ताः संव्यवहारं च लौकिकं त्यक्त्वा।
अन्तरनुसन्दधन्मनुं ते स्यां वा निष्कम्पदीपवद्योगी॥

जात्यभिमानविहीनो जन्तुषु सर्वत्र पूर्णतां पश्यन्।
भूतं भावि च न विदन् निर्मृष्टाशेषविषयेहः॥

त्यजतश्च न संपन्नं नासंपन्नं च वाञ्छतः क्वापि।
तृप्तिमनुत्तमसीमां लब्धवतः किं लभेय पदम्॥

पूजासमर्पणम्

१० अथ मणिमयमञ्चकाभिरामे कनकमय वितानराजमाने।
प्रसरदगरुधूपधूपितेऽस्मिन् भगवति भवनेऽस्तु ते निवासः॥

१० मुक्ताकुन्देन्दुगौरां मणिमयमकुटां रत्नताटङ्कयुक्तां
अक्षस्रक्पुस्तहस्तामभयवरकरां चन्द्रचूडां त्रिणेत्राम्।
नानालङ्कारयुक्तां सुरमकुटमणिद्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि॥

१० एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान् क्षमस्व।
न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः॥

सर्वा आवरणदेवता मन्त्रदेवताश्च देव्यङ्गे विलीना भावये। देवी ज्योतिर्मयी चिन्मयी भाति। लंबीजा पृथिवी गन्धं समर्पयति। हंबीज आकाशः पुष्पाणि समर्पयति। यंबीजो वायुर्धूपमाघ्रापयति। रं बीजोऽग्निः दीपं दर्शयति। वं बीजो वरुणोऽमृतोपहारं निवेदयति। देव्याः पादतले निविष्टः पुष्पाञ्जलिं समर्पयामि। देवीं संविन्मयीं हृदयं नयामि (खेचर्या)। संविदात्मरूपिणीं भावये।

जपसमर्पणं -. वक्रतुण्डादीनां षडङ्गन्यासः, दिग्बन्धः, ध्यानम्, मन्त्रजपः, षडङ्गन्यासः, दिग्विमोकः, लमित्यादि पञ्चपूजा।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणात्मकृतं जपम्।
सिद्धिर्भवतु देवेशि त्वत्प्रसादान्मयि स्थिरा॥

देव्या हस्ते जपं समर्पयेत्।
कायेन + समर्पयामि। ओं तत् सत्। ब्रह्मार्पणमस्तु।

## बाह्यपूजाविधिः

### आत्मपूजा

मूलेन प्राणायामः। कुण्डलिनीं ध्यात्वा ब्रह्मरन्ध्रे शिवशक्तिसंयोगं कुर्यात्।

(पीठपूजा- ४ महामण्डूकाय नमः। कालाग्निरुद्राय नमः। मूलप्रकृत्यै नमः। आधारशक्त्यै नमः। आदिकूर्माय नमः। अनन्ताय नमः। आदिवराहाय नमः। पृथिव्यै नमः। सुधार्णवाय नमः। रत्नद्वीपाय नमः। नन्दनोद्यानाय नमः। कल्पकवृक्षेभ्यो नमः। प्रभायै नमः। मायायै नमः। दुर्गायै नमः। रत्नद्वीपाय नमः। चिन्तामणिगृहाय नमः। नवरत्नप्राकाराय नमः। ह्रीं ज्ञानतत्त्वात्मने नमः। ह्रीं मायातत्त्वात्मने नमः। ह्रीं विद्यातत्त्वात्मने नमः। कामकोटिपीठाय नमः। जालन्धरपीठाय नमः। ओड्याणपीठाय नमः। यं रं लं वं शं षं सं हं ळं अष्टादशपीठेभ्यो नमः।

४. तमसे नमः। रजसे नमः। सत्वाय नमः। माणिक्य मण्डपाय नमः। सहस्रस्तंभमण्डपाय नमः। अमृतवापिकायै नमः। आनन्दवापिकायै नमः। विमर्शवापिकायै नमः।

बालातपोद्गाराय नमः । चन्द्रिकोद्गाराय नमः । महाशृङ्गारपरिखायै नमः । महापद्माटव्यै नमः । प्रकृतिमय पत्रेभ्यो नमः । विकृतिमयकेसरेभ्यो नमः । चिन्तामणिगृहान्तरालाय नमः । पूर्वाम्नायाय नमः । पूर्वद्वाराय नमः । दक्षिणाम्नायाय नमः । दक्षिणद्वाराय नमः । पश्चिमाम्नायाय नमः । षश्चिमद्वाराय नमः । उत्तराम्नायाय नमः । उत्तरद्वाराय नमः । रत्नद्वीपवलयाय नमः । मणिमयमहासिंहासनाय नमः । ब्रह्ममयैकमञ्चपादाय नमः । विष्णुमयैकमञ्चपादाय नमः । रुद्रमयैकमञ्च पादाय नमः । ईश्वरमयैकमञ्चपादाय नमः । सदाशिवमञ्चफलकाय नमः । हंसतूलतल्पाय नमः । हंसतूलमहोपधानाय नमः । कौसुंभास्तरणाय नमः । महामायायवनिकायै नमः । कामेश्वराङ्कमध्यस्थकामेश्वर्यंकाय नमः ।)

आसनम्

१० कनकमयवितर्दिस्थापिते तूलिकाढ्ये
विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।
भगवति रमणीये रत्नसिंहासनेऽस्मिन्
उपविश पदयुग्मं हेमपीठे निधाय ॥

पाद्यम्

१० दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥

अर्घ्यम्

१० गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतमिश्रम् ।
हेमपात्र निहितं सह रत्नैः अर्घ्यमेतदुररीकुरु मातः ॥

आचमनम्

१० जलजद्युतिना करेण जातीफलतक्कोललवङ्गगन्धमिश्रैः ।
अमृतैरमृतैरिवातिशीतैः भगवत्याचमनं विधीयताम् ॥

मधुपर्कः

१० निहितं कनकस्य संपुटे पिहितं रत्नपिधानकेन यत् ।
तदिदं जगदम्ब तेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥

स्नानम्

१० दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादराज्जननि त्वां पुनरुष्णवारिभिः ॥

एलोशीरसुवासितैः सकुसुमैर्गङ्गादितीर्थोदकैः
माणिक्यामलमौक्तिकामृतरसैः स्वच्छैः सुवर्णोदकैः ।
मन्त्रान्वैदिकतान्त्रिकान्परिपठन् सानन्दमत्यादरात्
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥

(गणपत्यथर्वशीर्ष श्रीरुद्र दुर्गा पुरुष श्रीसूक्तादिभिः अभिषिञ्चेत् ।) स्नानानन्तरं आचमनीयं समर्पयामि

वस्त्रधारणम् - केशप्रसाधनं च ।

१० बालार्कद्युति दाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ।
मुक्ताभिर्ग्रथितं सुकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥

१०. बहुभिरगरुधूपैः सादरं धूपयित्वा
भगवति तव केशान्कङ्क तैर्मार्जयित्वा ।

सुरभिभिररविन्दैश्चंपकैश्चर्चयित्वा
झटिति कनकसूत्रैर्जूटयन्वेष्टयामि ॥

आभरणभूषणम्

१० मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।
केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमात्
ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥

गन्धकुङ्कुमाक्षतधारणम्

(१०) मातः फालतले तवातिविमले काश्मीरकस्तूरिका
कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पद्रवं
ताटंके तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥

(१०) रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः ।
अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ॥

(१०) सीमन्ते ते भगवति मया सादरं न्यस्तमेतत्
सिन्दूरं मे हृदयकमले हर्षवर्षं तनोति ।
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिः
अन्तर्ध्वान्तं हरति सकलं चेतसा चिन्तयैव ॥

पुष्पालङ्करणम्

१० मन्दारकुन्दकरवीरलवङ्गपुष्पैः
त्वां देवि सन्ततमहं परिपूजयामि ।
जातीजपा वकुल चम्पककेतकादि-
नानाविधानि कुसुमानि च तेऽर्पयामि ॥

(गुरुमण्डलपूजा)

(श्रीनाथादि गुरुत्रयं) ऐं ह्रीं श्रीं ऐ क्लीं सौः हंसः शिवः सोऽहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः ।

ऐ ह्रीं श्रीं ऐं क्लीं सौः सोऽहं हंसः शिवः । स्वच्छप्रकाशविमर्शहेतवे श्री परमगुरवे नमः ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः शिवः सोऽहं हंसः स्वात्मानन्दपञ्जरविलीन तेजसे श्री परमेष्ठिगुरवे नमः ॥

(गणपतिं) ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । महागणपतये नमः ।

(पीठत्रयं) ओं ऐं ह्रीं, श्रीं क्लीं सौः कामगिरिपीठे ब्रह्मशक्त्यै सरस्वत्यै नमः ।

ओं ऐं ह्रीं, ह्रीं श्रीं सौः क्लीं ऐं पूर्णगिरिपीठे विष्णुशक्त्यै महालक्ष्म्यै नमः ।

ओं ऐं क्लीं सौः श्रीं ह्रीं ऐं जालन्धरपीठे रुद्रशक्त्यै श्रीमहागौर्यै नमः ।

(भैरवं) - ओं ह्रीं श्रीं फट् फं फां फिं फीं भैरवाय नमः ।

(सिद्धौघं) - ओं ह्रीं श्रीं सौः आं सिद्धौघाय नमः ।

(वटुक त्रयं) ओं ह्रीं श्रीं हुं फट् वटुकत्रयाय नमः ।

(पदयुगं) हसकलह्रीं हसकहलह्रीं सकलह्रीं पदयुगाय नमः ।

(दूतीक्रमं) ओं ऐं ह्रीं श्रीं अं आं सौः श्रीं ह्रीं सौः नवदूतीभ्यो नमः ।

(मण्डलं) ह्रीं श्रीं ऐं अग्निमण्डलाय नमः । ह्रीं श्रीं क्लीं सूर्यमण्डलाय नमः । ह्रीं श्रीं सौः चन्द्रमण्डलाय नमः ।

(वीरान्द्धचष्ट) ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं फट् फां फें षोडशवीरभैरवेभ्यो नमः ।

(चतुष्कषष्टि) ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं सौः ह्रीं श्रीं चतुष्षष्टिसिद्धेभ्यो नमः ।

(नवकं) द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौः ऐं नवमुद्राभ्यो नमः।

(वीरावलीपञ्चकम्) ऐं ह्रीं ऐं क्लीं सौः पञ्चवीरावलीभ्यो नमः ।

(श्रीमन्मालिनी) ऐं ह्रीं श्रीं अं आं + ळं क्षं श्रीं ह्रीं ऐं मालिन्यम्बायै नमः ।

(मन्त्रराजः) ऐं ह्रीं श्रीं ह्रीं ह्रीं हुं फट् मन्त्रराजाय नमः ।)

आवरणपूजा[१]

श्रीगुरुभ्यो ओं नमः । ओं श्रीगुरुश्रीपादुकां पूजयामि नमः । (देव्याः पुरः) ओं गं गणपतये नमः । श्रीगणपतिश्रीपादुकां पूजयामि नमः (पुरतः) ओं दुं दुर्गायै नमः । श्रीदुर्गाश्रीपादुकां पूजयामि नमः । (दक्षिणे) ओं क्षं क्षेत्रपालकाय नमः । श्रीक्षेत्रपालश्रीपादुकां पूजयामि नमः (पश्चात्) । ओं अं अभयङ्कराय नमः । श्री अभयङ्करश्रीपादुकां पूजयामि नमः (वामे) । ओं नमः कुलदेवतायै । कुलदेवता श्रीपादुकां पूजयामि नमः (पुरतः)

प्रथमावरणे भूपुरे (सर्वाशापरिपूरके) (प्रागादिक्रमेण)
१० सर्वाशापरिपूरकचक्राय नमः । (पुष्पाञ्जलिः) (पुरतः)

---

१. आवरणपूजा द्वेधा क्रियते, भूपुरादि विन्द्वन्तं एकं, यस्य क्रमोऽत्र दीयते । अन्यत् विन्द्वादि भूपुरान्तं, अस्यैव व्युत्क्रमेण तत्साध्येत । प्रथमावरणेत्यादि संख्यासंकेते भेदः तत्र । अन्यत्समानम् । तत्र षष्ठं प्रथमं भवति, पञ्चमं द्वितीयमित्यदि ।

१० इन्द्रशक्ति श्रीपादुकां पूजयामि नमः ।

१० अग्निशक्ति श्रीपादुकां पूजयामि नमः ।

१० यमशक्ति श्रीपादुकां पूजयामि नमः ।

१० निरृऋतिशक्ति श्रीपादुकां पूजयामि नमः ।

१० वरुणशक्ति श्रीपादुकां पूजयामि नमः ।

१० वायुशक्ति श्रीपादुकां पूजयामि नमः ।

१० कुबेरशक्ति श्रीपादुकां पूजयामि नमः ।

१० ईशान शक्ति श्रीपादुकां पूजयामि नमः ।

१० बालाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः । (३) (बिन्दौ)
(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनं)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।

(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० प्रथमावरणदेवतासहितायै सर्वाशापरिपूरकचक्रस्वामिन्यै बालांबायै नमः । (इति योनिमुद्रया प्रणमेत्)

द्वितीयावरणे - बहिरष्टदले (सर्वसौभाग्यदायके) (प्रागादिक्रमेण) (दलमध्ये)

१० सर्वसौभाग्यदायकचक्राय नमः । (पुष्पाञ्जलिः)

१० अनंगकुसुमांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगमेखलांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगमदनांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगमदनातुरांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगरेखांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगवेगिन्यंबा श्रीपादुकां पूजयामि नमः ।

१० अनंगांकुशांबा श्रीपादुकां पूजयामि नमः ।

१० अनंगमालिन्यंबा श्रीपादुकां पूजयामि नमः ।

(दलाग्रे) (प्रागादिक्रमेण)

१० वशिनीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० कामेश्वरीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० मोदिनीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० विमलावाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० अरुणावाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० जयिनीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० सर्वेश्वरीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० कौलिनीवाग्देवतांबा श्रीपादुकां पूजयामि नमः ।

१० बालांबा श्रीपादुकां पूजयामि तर्पयामि नमः । (३) (बिन्दौ)

(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनम्)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० द्वितीयावरणदेवतासहितायै सर्वसौभाग्यदायकचक्र-
स्वामिन्यै बालाम्बायै नमः ॥
(इति योनिमुद्रया प्रणमेत्)

## अन्तरष्टदले तृतीयावरणम् (सर्वार्थसाधकचक्रम्)

## (दलमध्ये) (प्रागादिक्रमेण)

१० सर्वार्थसाधकचक्राय नमः । (पुष्पाञ्जलिः)

१० ब्राह्म्यम्बा श्रीपादुकां पूजयामि नमः ।

१० माहेश्वर्यम्बा श्रीपादुकां पूजयामि नमः ।

१० कौमार्यम्बा श्रीपादुकां पूजयामि नमः ।

१० वैष्णव्यम्बा श्रीपादुकां पूजयामि नमः ।

१० वाराह्यम्बा श्रीपादुकां पूजयामि नमः ।

१० माहेन्द्र्यम्बा श्रीपादुकां पूजयामि नमः ।

१० चामुण्डाम्बा श्रीपादुकां पूजयामि नमः ।

१० महालक्ष्म्यम्बा श्री पादुकां पूजयामि नमः ।

(दलाग्रे) (प्रागादिक्रमेण)

१० असिताङ्गभैरव श्रीपादुकां पूजयामि नमः ।

१० रुरुभैरव श्रीपादुकां पूजयामि नमः ।

१० चण्डभैरव श्रीपादुकां पूजयामि नमः ।

१० क्रोधभैरव श्रीपादुकां पूजयामि नमः ।

१० उन्मत्तभैरव श्रीपादुकां पूजयामि नमः ।

१० कपालभैरव श्रीपादुकां पूजयामि नमः ।

१० भीषणभैरव श्रीपादुकां पूजयामि नमः ।

१० संहारभैरव श्रीपादुकां पूजयामि नमः ।

१० बालाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः । (बिन्दौ)

(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनं)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।<br>
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥<br>
(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० तृतीयावरणदेवता सहितायै सर्वार्थसाधक चक्रस्वामिन्यै
बालाम्बायै नमः । (इति योनिमुद्रया प्रणमेत्)

## षट्कोणे चतुर्थावरणम् (सर्वरक्षाकरम्) (प्रागादिक्रमेण)

(१०) सर्वसिद्धिप्रदचक्राय नमः। (पुष्पाञ्जलिः।)
(१०) साकिन्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) राकिण्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) लाकिन्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) काकिन्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) डाकिन्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) हाकिन्यम्बा श्रीपादुकां पूजयामि नमः।
(१०) याकिन्यम्बा श्रीपादुकां पूज यामि नमः (मध्ये)
(१०) बालाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (३)
(बिन्दौ)

(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनं)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्॥
(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० चतुर्थावरणदेवता सहितायै सर्वरक्षाकरचक्र स्वामिन्यै बालाम्बायै नमः। (इति योनिमुद्रया प्रणमेत्)

## त्रिकोणे पञ्चमावरणम् (सर्वसिद्धिप्रदचक्रम्)

१० सर्वसिद्धिप्रदचक्राय नमः (पुष्पाञ्जलिः)
१० रत्यम्बा श्रीपादुकां पूजयामि नमः।
१० प्रीत्यम्बा श्रीपादुकां पूजयामि नमः।
१० विजयाम्बा श्रीपादुकां पूजयामि नमः।
१० बालाम्बा श्रीपादुकां पूजयामि नमः। (३) (बिन्दौ)

(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनं)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।।

(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० पञ्चमावरणदेवता सहितायै सर्वसिद्धिप्रदचक्र स्वामिन्यै बालाम्बायै नमः। (इति योनिमुद्रया प्रणमेत्)

बिन्दौ सर्वानन्दमयचक्रे षष्ठावरणम् (मध्यत्रिकोण-बहिर्भागे आग्नेयीनैरृती - वायवी - ऐशानादि दिक्षु मध्ये परितश्च)

१० ऐं हृदयशक्ति श्रीपादुकां पूजयामि नमः।
१० क्लीं शिरः शक्ति श्रीपादुकां पूजयामि नमः।
१० सौः शिखाशक्ति श्रीपादुकां पूजयामि नमः।
१० ऐं कवचशक्ति श्रीपादुकां पूजयामि नमः।
१० क्लीं नेत्रशक्ति श्रीपादुकां पूजयामि नमः।
१० सौः अस्त्रशक्ति श्रीपादुकां पूजयामि नमः।
१० श्री बालाम्बा श्रीपादुकां पूजयामि नमः।

बिन्दोर्बहिः त्रिकोणेषु

१० ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा- श्रीमेधादक्षिणमूर्तिश्रीपादुकां पूजयामि नमः।
१० हंसः शिवः सोऽहं श्री गुरुश्रीपादुकां पूजयामि नमः।
१० सोहं हंसः शिवः श्रीपरमगुरु श्रीपादुकां पूजयामि नमः।
१० हंसः शिवः सोऽहं हंसः श्रीपरमेष्ठिगुरु श्रीपादुकां पूजयामि नमः।

१० सर्वानन्दमयचक्राय नमः (पुष्पाञ्जलिः)

१० सर्वमन्त्रेश्वरी - सर्वचक्रेश्वरी - सर्वजगदुत्पत्तिमातृका - सचक्रा सवाहना सालङ्कारा - सपरिवारा श्रीमद्बालाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः।

(मूलेन त्रिः सन्तर्प्य धूपदीपौ निवेदनं नीराजनं)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम्॥

(इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य)

१० षष्ठावरणदेवता सहितायै सर्वानन्दमयचक्रस्वामिन्यै बालाम्बायै नमः। (इति योनिमुद्रया प्रणमेत्)[१]

नवयोन्यात्मके यन्त्रे आवरणपूजा

ह्सौः सदाशिवमञ्चासनाय नमः। कामेश्वराङ्काय नमः। कामेश्वराङ्कमध्यस्थकामेश्वर्यङ्काय नमः। देव्यासनाय नमः। बालां ध्यात्वा प्राणशक्तिं प्रतिष्ठाप्य, आवाहनादि पुष्पान्तां पूजां कुर्यात् श्रीगुर्वभिन्नबालात्रिपुरसुन्दर्याज्ञां गृह्णीयात्।

श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक।
अनुज्ञां देहि भगवन् श्रीबालायजनाय मे॥

संविन्मये परे देवि परामृतरसप्रिये।
अनुज्ञां देहि बाले त्वं परिवारार्चनाय मे॥

१. प्रथमावरणार्चनम् - (बिन्दुमध्ये देवी। देव्या वामे) ४

1. हृदयादिभिः अङ्गैः प्रथममावरणं, बुद्धिः, मेधा, प्रज्ञा, प्रतिभा, धृतिः, विद्या, स्मृतिः वाणी इत्यष्टाभिः द्वितीयावरणं, ब्राह्म्यादिमातृभिः तृतीयावरणं, इन्द्रादिभिः चतुर्थं इन्द्राद्यायुधैः पञ्चममिति च पूजां कुर्वन्ति।

रत्यै नमः । रति श्रीपादुकां पूजयामि नमः । (देव्या दक्षिणे) ४ प्रीत्यै नमः । प्रीति श्रीपादुकां पूजयामि नमः । (देव्यग्रे) मनो भवायै नमः । मनोभवा श्रीपादुकां पूजयामि नमः । (पुष्पाञ्जलिं दत्वा)

७. अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।

एता देवताः पूजितास्तर्पिताः सन्तु इति पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत् ।

२. द्वितीयावरणार्चनम् । (मध्यत्रिकोणबहिर्भागे आग्नेयी - नैरृती-वायवी- ऐशानीदिक्षु क्रमेण)

४ आं सौः क्लीं ऐं हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि नमः । ४ ईं सौः क्लीं ऐं शिरः शक्तिश्रीपादुकां पूजयामि नमः । ४ ऊं सौः क्लीं ऐं शिखाशक्ति श्री पादुकां पूजयामि नमः । ४ ऐं सौः क्लीं ऐं कवचशक्तिश्रीपादुकां पूजयामि नमः । ४ औं सौः क्लीं ऐं नेत्रत्रय शक्ति श्रीपादुकां पूजयामि नमः (मध्ये) । अः सौः क्लीं ऐं अस्त्रशक्तिश्रीपादुकां पूजयामि नमः (दिक्षु परितः) । (पुष्पाञ्जलिं दत्वा)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।

एता देवताः प्रीतास्तर्पिता भवन्तु । (पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत् ।)

तृतीयावरणार्चनम् । (मध्यत्रिकोणस्य बहिः पूर्वादक्षिणा-पश्चिमोदीचीदिक्षु मध्ये च क्रमेण) ४ ह्रीं मनोभवाय नमः ।

मनोभव श्रीपादुकां[1] ०। ४ क्लीं मकरध्वजाय नमः। मकरध्वज श्रीपादुकां०। ४. ऐं कन्दर्पाय नमः। कन्दर्पश्रीपादुकां ०। ४ ब्लूं मन्मथाय नमः। मन्मथश्रीपादुकां ०। ४ स्त्रीं कामदेवाय नमः। कामदेव श्रीपादुकां ० (पुष्पाञ्जलिं दत्वा) अभीष्टसिद्धिं ........... तृतीयावरणार्चनम्। एता देवताः प्रीतास्तर्पिता भवन्तु। (पुष्पाञ्जलिं दत्वा योनि मुद्रया प्रणमेत्।

चतुर्थावरणार्चनम्- (मध्यत्रिकोणस्य बहिः मनोभवादि समीपे) ४. द्रां द्राविण्यै नमः। द्राविणीश्रीपादुकां ०। ४ द्रीं क्षोभिण्यै नमः। क्षोभिणीश्रीपादुकां ०। ४ ब्लूं आकर्षिण्यै नमः। आकर्षिणीश्रीपादुकां ०। ४ स्त्रीं संमोहिन्यै नमः। संमोहिनीश्रीपादुकां ० (पुष्पाञ्जलिं दत्वा) अभीष्टसिद्धिं मे देहि... चतुर्थावरणार्चनम्। इति पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्॥

पञ्चमावरणार्चनम्- (अष्टकोणस्य प्राच्याद्यष्टदिक्षु क्रमेण) ४. सुभगायै नमः। सुभगाश्रीपादुकां ०। ४ भगायै नमः। भगाश्रीपादुकां ०। ४ भगसर्पिण्यै नमः। भगसर्पिणी श्रीपादुकां ०। ४ भगमालिन्यै नमः। भगमालिनीश्रीपादुकां ०। ४. अनङ्गायै नमः। अनङ्गाश्रीपादुकां ०। ४ अनङ्गकुसुमायै नमः। अनङ्गकुसुमाश्रीपादुकां ०। ४. अनङ्गमेखलायै नमः। अनङ्गमेखलाश्रीपादुकां ०। ४. अनङ्गमदनायै नमः। अनङ्गमदना श्रीपादुकां ०। (पुष्पाञ्जलिं दत्वा) अभीष्ट + पञ्चमावरणार्चनम्। पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।

---

1 ० श्रीपादुकां पूजयामि नमः इति सर्वत्रानुवर्तते।

षष्ठावरणार्चना । (अष्टदलमूले प्राच्यादिदिक्षु) ४ आं ब्राह्म्यै नमः । ब्राह्मीश्री ० । ४ ईं माहेश्वर्यै नमः । माहेश्वरी श्री ० । ४ ऊं कौमार्यै नमः । कौमारी श्री ० । ४ ॠं वैष्णव्यै नमः । वैष्णवीश्री ० । ४ ॡं वाराह्यै नमः । वाराही श्री ० । ४ ऐं माहेन्द्र्यै नमः । माहेन्द्रीश्री ० । ४ औं चामुण्डायै नमः । चामुण्डाश्री ० । ४ अः महालक्ष्म्यै नमः । महालक्ष्मीश्री ० । (पुष्पाञ्जलिं दत्वा) अभीष्ट सिद्धिं + षष्ठमावरणार्चनम् । पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत् ।

सप्तमावरणार्चनम्- (अष्टदलमध्ये) ४. अं असिताङ्ग भैरवाय नमः । असिताङ्गभैरव श्री ० । ४ इं रुरुभैरवाय नमः । रुरु भैरवश्री ० । ४ उं चण्डभैरवाय नमः । चण्डभैरव श्री पादुकां ० । ४ ऋं क्रोधभैरवाय नमः । क्रोधभैरव श्री ० । ४ ऌं उन्मत्तभैरवाय नमः । उन्मत्तभैरव श्री ० । ४. एं कपालभैरवाय नमः । कपालभैरव श्री ० । ४. ओं भीषणभैरवाय नमः । भीषणभैरव श्री ० । ४. अं संहारभैरवाय नमः । संहारभैरव श्री ० । (पुष्पाञ्जलिः । अभीष्ट + सप्तमावरणार्चनम् । (पुष्पाञ्जलिः) योनिमुद्रया प्रणमेत् ।

अष्टमावरणार्चनम् । (अष्टदलाग्रे) (प्राच्यादि) ४ कामरूपपीठाय नमः । कामरूपपीठश्री ० । ४ मलयपीठाय नमः । मलयपीठ श्री ० । ४. कोल्लगिरिपीठाय नमः । कोल्लगिरिपीठ श्री ० । ४. चौहारापीठाय नमः । चौहारापीठश्री ० । ४. कुलान्तकपीठाय नमः । कुलान्तकपीठ श्री ० । ४. जालन्धरपीठाय नमः । जालन्धरपीठश्री ० । ४. उड्यानपीठाय नमः । उड्यानपीठश्री ० । ४. कोट्टपीठाय नमः । कोट्टपीठश्री० । (पुष्पाञ्जलिः) । अभीष्टसिद्धिं+....... अष्टमावरणार्चनम् । (पुष्पाञ्जलिः । योनिमुद्रया प्रणमेत् ।)

नवमावरणार्चनम् । (भूपुरमध्ये दशदिक्षु)[1] ४. हेतुकाय नमः । हेतुकश्री ० । ४. त्रिपुरान्तकाय नमः । त्रिपुरान्तकश्री ० । ४ वेतालाय नमः । वेताल श्री ० । ४ अग्निजिह्वाय नमः । अग्निजिह्वश्री ० । ४ कालान्तकाय नमः । कालान्तकश्री ० । ४ कपालाय नमः । कपालश्री ० । ४ एकपादाय नमः । एकपादश्री ० । ४ भीमरूपाय नमः । भीमरूपश्री ० । ४ मलयाय नमः । मलयश्री ० । ४ हाटकेश्वराय नमः । हाटकेश्वरश्री ० । पुष्पाञ्जलिः । अभीष्टसिद्धिं + नवमावरणार्चनम् । (पुष्पाञ्जलिः । योनिमुद्रया प्रणमेत् ।)

दशमावरणार्चनम्- ४ सवज्राय इन्द्राय नमः । इन्द्रश्रीपादुकां ० । ४ सशक्तये अग्नये नमः । अग्निश्रीपादुकां ० । ४ सदण्डाय यमाय नमः । यमश्रीपादुकां ० । ४ सखड्गाय निरृतये नमः । निरृतिश्री पादुकां ० ४ सपाशाय वरुणाय नमः । वरुणश्रीपादुकां ० । ४ सध्वजाय वायवे नमः । वायुश्रीपादुकां ० । सशंखाय सोमाय नमः । सोमश्री श्रीपादुकां ० । सत्रिशूलाय ईशानाय नमः । ईशानश्री ० । (पुष्पाञ्जलिः) अभीष्ट+ दशमावरणार्चतम् । (पुष्पाञ्जलिः । योनिमुद्रया प्रणमेत् ।)

पुष्पार्चना-

४. हंसः शिवः सोऽहं गुरुभ्यो नमः । ४. सोऽहं हंसः शिवः परमगुरुभ्यो नमः । ४. हंसः शिवः सोहं हंसः परमेष्ठिगुरुभ्यो नमः । ४. हंसः सोऽहं परात्परगुरु भ्यो नमः । ४. शिवाय गुरवे नमः । ४. ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा । - मेधादक्षिणामूर्तये नमः । ४. ओं समस्त गुरुमण्डलरूपिण्यै बालात्रिपुरसुन्दर्यै नमः ।

1 प्राचीशान्योर्मध्ये नवमी अधरा, नैरृत्रतीवारुण्योर्मध्ये दशमी ऊर्ध्वा दिक् ।

४. ओं गं गणपतये नमः । ४. ओं दुं दुर्गायै नमः । ४. क्षं क्षेत्रपालकाय नमः । ४. अं अभयङ्कराय नमः । ४. वां वास्तु पुरुषाय नमः । ४. यां योगिनीभ्यो नमः । ४. ह्रीं श्रीं फट् फं फां फिंफीं भैरवाय नमः । ४. सं सरस्वत्यै नमः । ४. कुलदेवताभ्यो नमः ।

४. गणानां त्वां गणपतिं + सादनम् । ब्रह्मणस्पतये गणपतये नमः । ४. ओं गं ओं गणपतये नमः । ४. ओं वक्रतुण्डाय हुं । वक्रतुण्डगणपतये नमः । ४. ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा - महागणपतये नमः । ४. ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं कएईलह्रीं तत्सवितुवरेण्यं गणपतये क्लीं हसकहलह्रीं भर्गो देवस्य धीमहि वरवरद सौः सकलह्रीं श्रीं धियो यो नः प्रचोदयात् सर्वजनं मे वशमानय स्वाहा - श्रीविद्यागणपतये नमः ।

ओं श्रीं ह्रीं क्लीं सुमुखाय नमः । एकदन्ताय नमः । कपिलाय नमः । गजकर्णकाय नमः । लम्बोदराय नमः । विकटाय नमः । विघ्नराजाय नमः । विनायकाय नमः । धूमकेतवे नमः । गणाध्यक्षाय नमः । फालचन्द्राय नमः । गजाननाय नमः । वक्रतुण्डाय नमः । शूर्पकर्णाय नमः । हेरम्बाय नमः । स्कन्दपूर्वजाय नमः ।

४ ओं शं ओङ्कारस्वरूपाय ओजोधराय ओजस्विने नमः संहृताय इष्टचित्तात्मने भास्वरूपाय नमः । रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय नमः । हं षण्मुखशरजन्मने शुभलक्षणाय शिखिवाहनाय नमः । णं कृशानुसंभवाय कवचिने कुक्कुटध्वजाय नमः । भं

कन्दर्पकोटिदीप्यमानाय द्विषड्बाहवे द्वादशाक्षाय नमः । वं खेटधराय खड्गिने शक्तिहस्ताय सुब्रह्मण्याय नमः ।

(४ ओं ह्रीं श्रीं क्लीं औं सौः शरहणभव रहणभवश हणभवशर णभवशरह भवशरहण वशरहणभ शरवणभवाय नमः ।)

(४. अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं मातृकादेव्यै नमः ।

४ ऐं वद वद वाग्वादिनि स्वाहा । वाग्वादिन्यै नमः

४ तत्सवितुर्व + प्रचोदयात् । गायत्र्यै नमः ।

४ ऐं उच्छिष्टचाण्डालि मातङ्गि क्लीं स्वाहा । मातङ्ग्यै नमः ।

४ ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गीश्वरि सर्वजनमनोहरि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्री पुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि त्रैलोक्यं मे वशमानय स्वाहा । सौः क्लीं ऐं श्रीं ह्रीं ऐं राजमातङ्गीश्वर्यै नमः ।

४ ओं ऐं ह्रीं श्रीं ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः । रुन्धे रुंन्धिनि नमः । जम्भे जम्भिनि नमः । मोहे मोहिनि नमः । स्तम्भे स्तंभिनि नमः । सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुख गतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुं फट् स्वाहा । वाराह्यै नमः ।)

( - ओं श्रीं ह्रीं क्लीं इन्द्राय नमः । अग्नये नमः । यमाय नमः ।

निरृतये नमः । वरुणाय नमः । वायवे नमः । कुबेराय नमः । ईशानाय नमः ।

ओं श्रीं ह्रीं क्लीं ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः । वाराह्यै नमः । माहेन्द्र्यै नमः । चामुण्डायै नमः । महालक्ष्म्यै नमः ।

- ओं श्रीं ह्रीं क्लीं ऋद्ध्यामोदाभ्यां नमः । समृद्धिप्रमोदाभ्यां नमः । कान्ति सुमुखाभ्यां नमः । मदनावतीदुर्मुखाभ्यां नमः । मदद्रवा अविघ्नाभ्यां नमः । द्राविणीविघ्नकर्तृभ्यां नमः । वसुधारा शङ्खनिधिभ्यां नमः । वसुमतीपद्मनिधिभ्यां नमः ।

-ओं श्रीं ह्रीं क्लीं हृदयशक्तये नमः । शिरश्शक्तये नमः । शिखाशक्तये नमः । कवचशक्तये नमः । नेत्रत्रयशक्तये नमः । अस्त्रशक्तये नमः ।

-ओं श्रीं ह्रीं क्लीं रमारमापतिभ्यां नमः । गिरिजागिरिजापतिभ्यां नमः । रतिरतिपतिभ्यां नमः । महीमहीपतिभ्यां नमः । महालक्ष्मीमहागणपतिभ्यां नमः । श्रीमहागणपतये नमः । श्रीविद्यागणेशाय नमः ।)

४ ओं ह्रीं नमः शिवाय । श्रीकामेश्वराय नमः ।

४ ओं ह्रीं नमः शिवायै । ओं ह्रीं नमः शिवाय । कामेश्वरीकामेश्वराभ्यां नमः । ४ क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं श्रीं । ओं नमः ह्रीं ओं । शिवकामेश्वराङ्कस्थ कामेश्वर्यै नमः । ४ ओं श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं, क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं । ओं नमः ह्रीं ओं । शिवकामेश्वराङ्कस्थ कामेश्वर्यै नमः । ४ ओं क ए ई ल ह्रीं हसकहल ह्रीं सकल ह्रीं श्रीं ऐं क्लीं सौः शिवकामेश्वराङ्कस्थ कामेश्वर्यङ्कवासिन्यै बालायै नमः ।

४ ओं ऐं क्लीं श्रीं वषट् सौः क्लीं श्रीं वौषट् ऐं क्लीं श्रीं सौः क्लीं ऐं ओं आं ह्रीं क्रों बालात्रिपुरसुन्दरि प्रसन्नवाग्वादिनि आश्रावय आश्रावय आकर्षयाकर्षय, आवाहयावाहय, मां रक्ष रक्ष सौभाग्यदायिनि स्वर्णाकर्षणमहालक्ष्मि धनं देहि देहि सर्वजनं मे वशमानय स्वाहा । बालाम्बायै नमः । ४ ऐं क्लीं सौः बालाम्बायै नमः । ४ ऐं क्लीं सौः सौः क्लीं ऐं बालाम्बायै नमः । ४ ओं ईं ईं नमः कामकलायै बालाम्बायै नमः ।

## अष्टोत्तरशतनामार्चना

ओं ऐं ह्रीं श्रीं कल्याण्यै नमः । त्रिपुरायै नमः । बालायै नमः । मायायै नमः । त्रिपुरसुन्दर्यै नमः । सुन्दर्यै नमः । सर्वसौभाग्यवत्यै नमः । ह्रींकाररूपिण्यै नमः । ऐंकार्यै नमः । सर्वजनन्यै नमः । क्लींकार्यै नमः । परमेश्वर्यै नमः । सौःकार्यै नमः । सर्वशक्त्याढ्यायै नमः । त्र्यक्षर्यै नमः । दिव्यगन्धिन्यै नमः । संविदानन्दलहर्यै नमः । श्रीविद्यायै नमः । त्रिपुरेश्वर्यै नमः । गुप्तायै नमः । २०

गुप्ततरायै नमः । नित्यायै नमः । नित्याषोडशकावृतायै नमः । भक्तानुरक्तायै नमः । रक्ताङ्ग्यै नमः । शिवायै नमः । सर्वारुणायै नमः । शुभायै नमः । मोहिन्यै नमः । परमानन्दायै नमः । कामेश्यै नमः । तरुण्यै नमः । कलायै नमः । पद्मावत्यै नमः । भगवत्यै नमः । पद्मरागकिरीटिन्यै नमः । रक्तवस्त्रायै नमः । रक्तभूषायै नमः । रक्तगन्धानुलेपनायै नमः । सौगन्धिकमिलद्वेण्यै नमः । ४०

मन्त्रिण्यै नमः । मन्त्रपुष्पिण्यै नमः । तत्त्वासनायै नमः । तत्त्वमय्यै नमः । सिद्धान्तः पुरवासिन्यै नमः । श्रीवाणीड्यायै नमः । महादेव्यै नमः । कौलिन्यै नमः । परदेवतायै नमः ।

कैवल्यरेखायै नमः । वशिन्यै नमः । सर्वेश्यै नमः । सर्वमङ्गलायै नमः । नारायण्यै नमः । वेदवेद्यायै नमः । सर्वसंपत्प्रदायै नमः । सत्यै नमः । चतुर्भुजायै नमः । चन्द्रचूडायै नमः । पुराणागमबोधितायै नमः । ६०

भूतेश्वर्यै नमः । भूतमय्यै नमः । पञ्चाशद्वर्णरूपिण्यै नमः । सर्वमङ्गलमाङ्गल्यायै नमः । कामाक्ष्यै नमः । कामदायिन्यै नमः । किङ्करीभूतगीर्वाण्यै नमः । सुधापानविनोदिन्यै नमः । आधारवीथीपथिकायै नमः । स्वाधिष्ठानसमाश्रितायै नमः । मणिपूरसमासीनायै नमः । अनाहतनिवासिन्यै नमः । विशुद्धिचक्रनिलयायै नमः । आज्ञाचक्रनिवासिन्यै नमः । अष्टत्रिंशत्कलामूर्तये नमः । सुषुम्नागारमध्यगायै नमः । योगीश्वरमुनिध्येयायै नमः । परब्रह्मस्वरूपिण्यै नमः । दिक्पालशक्तिसंयुक्तायै नमः । सर्वाशापरिपूरकायै नमः । ८०

अनङ्गकुसुमादीड्यायै नमः । वाग्देव्यष्टकसंवृतायै नमः । सर्वसौभाग्यदेशान्यै नमः । मात्रष्टकसमावृतायै नमः । भैरवाष्टकसंसेव्यायै नमः । सर्वाभीष्टार्थसाधिकायै नमः । योगिनीषट्कसंसेव्यायै नमः । सर्वरक्षाकराधिपायै नमः । रतिप्रीतिविजयाख्यत्रिशक्तिगुरुसेवितायै नमः । सर्वसिद्धिप्रदेशान्यै नमः । सर्वानन्दमयाधिपायै नमः । रहः पूजासमालोलायै नमः । बिन्दुस्थलमनोहरायै नमः । त्रिकोणमध्यनिलयायै नमः । षट्कोणपुरवासिन्यै नमः । वसुपत्रद्वयावासायै नमः । भूपुरद्वयमध्यगायै नमः । शिवकामेश्वराङ्कस्थकामेश्वर्यङ्कवासिन्यै नमः । कामेश्वरीसमाकारायै नमः । फुल्लकल्हारमध्यगायै नमः । १००

पुस्तकाभीतिवरदजपमालालसत्करायै नमः । तरुणारुण-देहाभायै नमः । दिव्याभरणभूषितायै नमः । बन्धूककुसुमप्रख्यायै नमः । बाललीलाविनोदिन्यै नमः । काश्मीरकर्दमालिप्त-तनुच्छायाविराजितायै नमः । सपर्याचारनिरतगुरु मण्डल-सेवितायै नमः । चतुर्वर्गप्रदानोत्कनित्यकल्याणरूपिण्यै नमः । १०८

आवरणार्चना[1]

४ बालांबायै नमः । ४ इन्द्रशक्त्यंबायै नमः । ४ अग्निशक्त्यंबायै नमः । ४ यमशक्त्यंबायै नमः । ४ निरृतिशक्त्यंबायै नमः । ४ वरुणशक्त्यंबायै नमः । ४ वायुशक्त्यंबायै नमः । ४ कुबेरशक्त्यंबायै नमः । ४ ईशानशक्त्यंबायै नमः । ४ सर्वाशापूरकचक्रस्वामिन्यै नमः । १० बालाम्बायै नमः ।

४. अनंगकुसुमांबायै नमः । ४ अनंगमेखलांबायै नमः । ४ अनंगमदनांबायै नमः । ४ अनंगमदनातुरांबायै नमः । ४ अनंगरेखांबायै नमः । ४ अनंगवेगिन्यंबायै नमः । ४ अनंगांकुशांबायै नमः । ४ अनंगमालिन्यंबायै नमः । ४ वशिनीवाग्देवतांबायै नमः । ४ कामेश्वरीवाग्देवतांबायै नमः । ४ मोदिनीवाग्देवतांबायै नमः । ४ विमलावाग्देवतांबायै नमः । ४ अरुणावाग्देवतांबायै नमः । ४ जयिनीवाग्देवतांबायै नमः । ४ सर्वेश्वरीवाग्देवतांबायै नमः । ४ कौलिनीवाग्देवतांबायै नमः । ४ सर्वसौभाग्य दायकचक्रस्वामिन्यै नमः । १० बालाम्बायै नमः ।

४ ब्राह्म्यंबायै नमः । ४ माहेश्वर्यंबायै नमः । ४ कौमार्यंबायै नमः । ४ वैष्णव्यंबायै नमः । ४ वाराह्यंबायै नमः । ४ माहेन्द्र्यंबायै नमः । ४ चामुण्डांबायै नमः । ४ महालक्ष्म्यंबायै नमः । ४

१. आवरणपूजाकरणाशक्तौ पुष्पार्चना कर्तुं शक्यते ।

असितांगभैरवाय नमः । ४ रुरुभैरवाय नमः । ४ चण्डभैरवाय नमः । ४ क्रोधभैरवाय नमः । ४ उन्मत्तभैरवाय नमः । ४ कपालभैरवाय नमः । ४ भीषणभैरवाय नमः । ४ संहारभैरवाय नमः । ४ सर्वार्थसाधकचक्रस्वामिन्यै नमः । १० बालांबायै नमः ।

४ साकिन्यंबायै नमः । ४ राकिण्यंबायै नमः । ४ लाकिन्यंबायै नमः । ४ काकिन्यंबायै नमः । ४ डाकिन्यंबायै नमः । ४ हाकिन्यंबायै नमः । ४ ४ याकिन्यं बायै नमः । सर्वक्षाकर-चक्रस्वामिन्यै नमः । १० बालांबायै नमः । ४ रत्यंबायै नमः । ४ प्रीत्यंबायै नमः । ४ विजयांबायै नमः । ४ सर्वसिद्धिप्रदचक्रस्वामिन्यै नमः । १० बालाम्बायै नमः ।

४ ऐं हृदयशक्त्यंबायै नमः । ४ क्लीं शिरः शक्त्यम्बायै नमः । ४ सौः शिखाशक्त्यम्बायै नमः । ४ ऐं कवचशक्त्यम्बायै नमः । ४ क्लीं नेत्रत्रयशक्त्यम्बायै नमः । ४ सौः अस्त्रशक्त्यम्बायै नमः । १० बालाम्बायै नमः ।

४ गुरुभ्यो नमः । ४ परमगुरुभ्यो नमः । ४ परमेष्ठिगुरुभ्यो नमः । ४ सर्वानन्दमयचक्रस्वामिन्यै नमः । १० बालाम्बायै नमः ।

धूपः

१०. लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः
कर्पूराकलितैः शिरैर्मधुयुतैर्गोसपिषा लोडितैः ।
श्रीकण्ठागरुगुग्गुलुप्रभृतिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥

दीपः

१०. रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषा लोडितैः
दीपैर्दीर्घतरान्धकारभिदुरैः बालार्ककोटिप्रभैः ।

आताम्रज्वलदुज्ज्वलप्रविलसद्रत्नप्रदीपैस्तथा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥

निवेदनम्

१०. मातस्त्वां दधि दुग्धपायस महाशाल्यन्नसन्तानिका-
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः ।
एलाजीरकहिङ्गुनागर निशाकुस्तुम्भरीसंस्कृतैः
शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्चयन् ॥

(देव्यग्रे चतुरश्रमण्डलं सामान्यार्घ्यं जलेन विधाय, तत्र यथासंभवं नैवेद्यं निधाय, ओं वं इति धेनुमुद्रया अमृतीकृत्य ४ मूलेन सव्याहृत्या गायत्र्या च प्रोक्ष्य सत्यं त्वर्तेन (ऋतं त्वा सत्येन) परिषिञ्चामीति परिषिच्य ४ सपरिवारायै श्रीबालात्रिपुरसुन्दर्यै नैवेद्यं कल्पयामि, अमृतो पस्तरणमसि । वामकरेण ग्रासमुद्रां दक्षकरेण प्राणादि पञ्च मुद्राश्च दर्शयन् ४ ऐं प्राणाय स्वाहा ४. क्लीं अपानाय स्वाहा। ४. सौः व्यानाय स्वाहा। ४. ऐं क्लीं उदानाय स्वाहा । ४. ऐं क्लीं सौः समानाय स्वाहा । ४ ब्रह्मणे स्वहा। १०. सर्वतत्वव्यापिका बाला त्रिपुरसुन्दरी तृप्यतु। मधु वाता ऋताय ते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । इति पुष्पाञ्जलिं विधाय, भुञ्जानां देवीं ध्यायेत्।

सापूपसूप दधि दुग्ध सुधा घृतानि
सुस्वादु भक्त परमान्न पुरस्सराणि ।
शाकोल्लसन्मरिचजीरक बाह्लिकानि
भक्ष्याणि भुंक्ष्व जगदम्ब मयार्पितानि ॥

क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु।
मातरेतदमृतोपमं पयः संभ्रमेण परिपीयतां मुहुः ॥

अतिशीतमुशीरवासितं तपनीये कलशे निवेशितम्।
पटपूतमिदं जितामृतं शुचि गङ्गाजलमम्ब पीयताम्॥

(देवीं भुक्तवतीं ध्यात्वा) अमृतापिधानमसि (इति उत्तरापोशनं दद्यात्।)

उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन॥

जब्वाम्ररम्भाफलसंयुतानि द्राक्षाफलक्षौद्रसमन्वितानि।
सनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि॥

ताम्बूलसमर्पणम्

१०. एलालवङ्गादि समन्वितानि तक्कोलकर्पूर विमिश्रितानि।
ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि॥

कर्पूरनीराजनम्

१०. सविनयमथ दत्वा जानुयुग्मं धरण्यां
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य।
मुखकमलसमीपे तेऽम्ब सार्धत्रिवारं
भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः॥

स्वर्ण - मन्त्रपुष्पाञ्जलिः - उपचाराः

१०. अथ बहुमणिमिश्रैः मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि॥

१०. तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः ।
तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः ॥

१०. पदे पदे यत्परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति ।
तत्सर्वपापक्षयहेतुभूतं प्रदक्षिणं ते परितः करोमि ॥

१०. रक्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्व-रेखाकुलिशाङ्किताभ्याम्
अशेषबृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥

१०. चरणनलिनयुग्मं पङ्कजैः पूजयित्वा
कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते
हृदयकमलमध्ये देवि हर्षं तनोतु ॥

अथ मणिमयमञ्चकाभिरामे कनकमय वितानराजमाने ।
प्रसरदगरुधूपधूपितेऽस्मिन् भगवति भवनेऽस्तु ते निवासः ॥

एतस्मिन्मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदौ निधाय हस्तौ ।
विस्तीर्णे मृदुलतरोत्तरच्छदेऽस्मिन् पर्यङ्के कनकमये निषीद मातः ॥

क्षणमथ जगदम्ब मञ्चकेऽस्मिन् मृदुतरतूलिकया विराजमाने ।
अतिरहसि मुदा भृतान्तरङ्गा सुखशयनं कुरु तत्र मां स्मरन्ती ॥

पूजासमर्पणम्

१० मुक्ताकुन्देन्दुगौरां मणिमयमकुटां रत्नताटङ्कयुक्तां
अक्षस्रक्पुस्तहस्तामभयवरकरां चन्द्रचूडां त्रिणेत्राम् ।
नानालङ्कारयुक्तां सुरमकुटमणिद्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥

१०. एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान् क्षमस्व ।

न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ।।

७. श्रीबाला त्रिपुरसुन्दरीपार्षदेभ्यो नमः। बलिमुपहारयामि।

पूजासमापनम्

वक्रतुण्डादीनां मन्त्राणां पुनः षडङ्गन्यासः दिग्बन्धः, ध्यानं, मन्त्रजपो यथावकाशं, उत्तराङ्ग षडङ्गन्यासः, दिग्विमोकः, लमित्यादि पञ्चपूजा, जपसमर्पणम्।

साधु वाऽ साधु वा कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देवि गृहाणाराधनं मम ।।

इति देव्या वामहस्ते पूजां समर्प्य, शंखमुद्धृत्य देव्युपरि त्रिः परिभ्राम्य, तज्जलं आत्मानं समवेतांश्च प्रोक्ष्य, शंखं प्रक्षाल्य निदध्यात्।

ज्ञानतोऽज्ञानतो वापि यन्मयाऽऽचरितं शिवे।
बाल कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ।।

सर्वा आवरण देवताः देव्यङ्गे विलीनाः भावये । देवी ज्योतिर्मयी चिन्मयी विभाति । लंबीजा पृथिवी गन्धं समर्पयति । हंबीज आकाशः पुष्पाणि समर्पयति। यं बीजो वायुर्धूपमाघ्रा पयति। रंबीजोऽग्निर्दीपं दर्शयति । वंबीजो वरुणोऽमृतो पहारं निवेदयति । देव्याः पाद तले निविष्टः पुष्पाञ्जलिं समर्पयामि । देवीं संविन्मयीं हृदयं नयामि। (खेचर्या) संविदात्मरूपिणीं भावये। विशेषार्घ्यपात्रं मूलेन आमस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेण आदाय आर्द्रं ज्वलतीति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुतं भावयेत्। मूलेन तीर्थनिर्माल्ये स्वीकुर्यात्। ओं तत्सद्ब्रह्मार्पणमस्तु ।।

## श्रीबालाहोमः (लघुः)

सङ्कल्पः- श्रीपरमेश्वरप्रीत्यर्थं श्रीबालात्रिपुरसुन्दरी प्रसादसिद्ध्यर्थं श्रीबाला होमकर्म करिष्ये। (अप उपस्पृश्य)

कलशं गन्धपुष्पाक्षतैरभ्यर्च्य पूजां कृत्वा, वं इति २१ वारं अभिमन्त्र्य धेनुमुद्रया अमृतीकृत्य, तेनात्मानं अग्निकुण्डं पूजाहोमद्रव्याणि च प्रोक्ष्य, आत्मनो दक्षिणे भागे पीठे (कलशे मूर्तौ यन्त्रे वा) देवीं बालां स्थापयेत्।

आत्मनः पुरतः चतुरश्रस्थण्डिलं (होमकुण्डं) मूलेन निरीक्ष्य, फट् इति प्रोक्ष्य, कुशेन ताडयित्वा, कुशं नैर् ऋत्यां परिहृत्य, स्थण्डिलोपरि प्रागग्राः तिस्रो रेखाः दक्षिणे वामे मध्ये च क्रमेण विलिख्य, तदुपरि उदगग्राः पश्चिमे मध्ये पूर्वत्र च क्रमेण विलिख्य, अद्भिरवोक्ष्य अप उपस्पृशेत्।

भूर्भुवस्सुवरों इति अग्निं प्रतिष्ठाप्य, प्राक् तोयं निधाय, अग्निमिध्वा, प्रज्वालयेत् । प्रागग्रैः उदगग्रैश्च दर्भैः अग्निं परिस्तीर्य, प्रागादि दक्षिणानुत्तरान् उत्तरानधरान् कृत्वा, उत्तरेणाग्निं दर्भान् संस्तीर्य, तेषु द्वन्द्वं न्यञ्चि दर्वीं आज्यस्थालीं प्रोक्षणीं इतरदर्वीं च निदध्यात्। समौ अप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ पवित्रे कृत्वा अद्भिरनुमृज्य सपवित्रेण पाणिना पात्राणि संस्पृश्य, प्रोक्षणीपात्रमादाय, अपरेणाग्निं निधाय, सपवित्रे तस्मिन् अक्षतैः सह अपः आसिच्य, प्राचीः त्रिरुत्पूय, पात्राण्युत्तानानि कृत्वा, सपवित्रेण पाणिना सर्वाभिः अद्भिः त्रिः प्रोक्ष्य प्रोक्षणीपात्रं दक्षिणतो निदध्यात्।

आज्यं विलाप्य, अपरेणाग्निं पवित्रान्तर्हितायां आज्यस्थाल्यां आज्यं निरूप्य, उदीचोऽङ्गारान् निरूह्य,

तेष्वाज्यमधिश्रित्य, ज्वलता तृणेन अवद्योत्य, द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य, त्रिः पर्यग्नि कृत्वा उदगुद्वास्य, अङ्गारान् प्रत्यूह्य अग्नेः पश्चात् दर्भेषु आज्यस्थलीं निधाय, उदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रग्रान्थिं विस्रस्य, अप उपस्पृश्य, प्रागग्रमग्नौ प्रहरेत्।

दर्वीं इतरदर्वीं च अग्नौ प्रतितप्य, दर्भैः संमृश्य प्रोक्ष्य, निधाय, दर्भान्, अद्भिः संस्पृश्य अग्नौ प्रहरति।

अग्निं परिषिञ्चति - अदितेऽनु मन्यस्व । (दक्षिणतः प्राचीनं) अनुमतेऽनुमन्यस्व । (पश्चात् उदीचीनं) सरस्वतेऽनुमन्यस्व । (उत्तरतः प्राचीनं) देव सवितः प्रसुव । (समन्तात् )

अग्निं ध्यायेत् - चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश। एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः । प्राङ्मुखो देव। हे अग्ने ! ममाभिमुखो भव। इति प्रार्थयेत्।

होमकुण्डं गन्धपुष्पाक्षतैः अलङ्कृत्य (दिक्षु) -इन्द्राय नमः। अग्नये नमः। यमाय नमः।निरृतये नमः। वरुणाय नमः। वायवे नमः। सोमाय नमः। ईशानाय नमः। (मध्ये) अग्नये नमः। (आत्मनि) आत्मने नमः। इत्यभ्यर्च्य,

(इतरदर्व्या जुहोति -वायव्या आग्नेय्यन्तं) स्वाहा । प्रजापतय इदं, न मम । (प्रधानदर्व्या जुहोति - नैरृत्या ऐशान्यन्तं) स्वाहा। इन्द्रायेदं, न मम। (उत्तरार्ध पूर्वार्धे) सोमाय स्वाहा। सोमाय इदं, न मम।

(मध्ये) अग्नये स्वाहा। अग्नय इदं, न मम।

आरंभप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावितसमस्त दोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि । ओं भूर्भुवस्सुवस् स्वाहा। प्रजापतय इदं न मम। श्रीबाला मन्त्रं यथोपदेशं ऋषि - छन्दो -देवता - बीज -शक्ति - कीलक -विनियोग - कर - हृदयादिन्यासदिग्बन्धान् कृत्वा अरुणकिरण + कल्याण शीला इति त्रिरावृत्तमूलमन्त्रेण च ध्यात्वा लमित्यादि पूजाः कृत्वा +अस्मिन् कुंभे (मूर्तौ) अग्नौ च देवीं बालां सपरिवारां आवाहयामि। (उभयत्र, पृथक्पृथग्वा प्राणान् प्रतिष्ठापयेत्।)

ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं (यरलव शषसहों) हंसः सोऽहं सोऽहं हंसः श्रीबालायाः प्राण इह प्राणः। जीव इह स्थितः । सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राण प्राणापानव्यानोदानसमानाः इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा सान्निध्यं कुर्वन्तु स्वाहा । असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृलया नः स्वस्ति। आं ह्रीं क्रों, क्रों ह्रीं आं (इति ४० वारं जप्त्वा) श्रीबाला प्राणशक्त्यै नमः । (इति धूपं दीपं घृतमधुनिवेदनं च कुर्यात्।) (इतः परं ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः, इति बीजानां इति ७ संज्ञा।) ७. श्रीबालायै नमः। आवाहिता भव। सन्निहिता भव। सन्निरुद्धा भव। अवकुण्ठिता भव। देवि प्रसीद प्रसीद ।देवि सर्वजगन्नाथे यावद्धोमावसानकम्। तावत्त्वं प्रीतिभावेन बिम्बे (कलशे) अग्नौ च सन्निधिं कुरु।। इति प्रार्थयेत्।

ततः अग्नौ कुंभे (बिम्बे) च युगपत् पृथक्पृथग्वा आसनादि उपचारान् समर्पयेत्।

७ श्रीबालायै नमः आसनं समर्पयामि । ७ श्रीबालायै पादयोः पाद्यं समर्पयामि। ७ श्रीबालायै हस्तयोरर्घ्यं समर्पयामि। ७ श्रीबालायै आचमनीयं समर्पयामि। ७ श्रीबालायै स्नानं समर्पयामि। स्नानानन्तरं आचमनीयं समर्पयामि। ७ श्रीबालायै वस्त्राणि धारयामि । आचमनीयं समर्पयामि । ७ श्रबिालायै उपवीतं समर्पयामि । ७श्रीबालायै आभरणानि समर्पयामि । ७ श्री बालायै गन्धान् धारयामि । गन्धोपरि हरिद्राकुङ्कुमं समर्पयामि। ७ श्रीबालायै अक्षतान् समर्पयामि। ७ श्रीबालां पुष्पैः पूजयामि (अष्टोत्तर शत नामभिः) ७ श्रीबालायै धूपं आघ्रापयामि । ७ श्रीबालायै दीपं दर्शयामि । आचमनीयं समर्पयामि । ७ श्रीबालायै नारिकेलं कदलीफलं महानैवेद्यं समर्पयामि । अचमनीयं समर्पयामि । ७श्रीबालायै ताम्बूलं समर्पयामि। ७ श्रीबालायै कर्पूरनीराजनं समर्पयामि। ७श्रीबालायै प्रदक्षिणनमस्कारान् समर्पयामि । ७श्रीबालायै मन्त्रपुष्पं समर्पयामि।

प्रणव त्रितारीयुक्तेन मूलमन्त्रेण स्वाहान्तेन (ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वाहा इति, ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः क्लीं ऐं स्वाहा इति वा यथोपदेशं) आज्येन द्वादशवारं, कदली-दाडिम-आम्र - पायस-गुडान्न- शर्करान्नादिभिः मध्वाज्यगुडक्षीराक्तैः यथाकामं १२-२१-१०८ वारं जुहयात्। सत्यवकाशे आवरण देवताश्च जुहुयात्, ओं ऐं ह्रीं श्रीं इन्द्राय स्वाहा....ऐं ह्रीं श्रीं विजयायै स्वाहा इति आवरण पूजोक्त क्रमेण जुहुयात्। अन्ते आज्येन ७ वारं जुहुयात्। पूर्णाहुतिद्रव्यं प्रणवात्रितारीयुक्तेन मूलमन्त्रेण ४० वारं श्रीसूक्तेन चाभिमन्त्र्य पूर्णाहुतिं जुहुयात्।

कुंभेऽग्नौ पुनः पूजा आसनादिमन्त्रपुष्पान्ता । शर्कराद्यन्नानि भक्ष्याणि फलानि यथाकामं श्रीबालायै निवेदयेत्।

अथ, ओं प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्। स्वाहा। प्रजापतय इदं, न मम। ओं भूः स्वाहा अग्नय इदं, न मम। ओं भुवः स्वाहा। वायव इदं, न मम । ओं सुवः स्वाहा। सूर्यायेदं, न मम। यदस्य कर्मणोऽ त्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद् विद्वान् सर्वं स्विष्टं सुहुतं करोतु स्वाहा । अग्नये स्विष्टकृते इदं, न मम । ओं भूर्भुवस्सुवः स्वाहा । प्रजापतय इदं न मम। (प्राणानायम्य) अस्मिन् कर्मणि अविज्ञात प्रायश्चित्तादीनि करिष्ये।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथम्। स्वाहा। अग्नय इदं, न मम। पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम् । स्वाहा । अग्नय इदं, न मम । यत्पाकत्रा मनसा दीनदक्षा न । यज्ञस्य मन्वते मर्तासः । अग्नि ष्टद्धोता क्रतुविद् विजानन्। यजिष्ठो देवान् ऋतुशो यजाति। स्वाहा। अग्नय इदं, न मम।

ओं भूः स्वाहा। अग्नय इदं न मम। ओं भुवः स्वाहा। वायव इदं, न मम । ओं सुवः स्वाहा । सूर्यायेदं, न मम । अस्मिन् होमकर्मणि मध्ये संभावित समस्त मन्त्रलोप तन्त्रलोप द्रव्यलोपादि समस्तदोषप्रायश्चित्तार्थं सर्व- प्रायश्चित्ताहुतिं होष्यामि। ओं भूर्भुवस्सुवस्स्वाहा। प्रजापतय इदं, न मम। ओं श्री विष्णवे स्वाहा। विष्णवे परमात्मने इदं, न मम। ओं नमो रुद्राय

पशुपतये स्वाहा। रुद्राय पशुपतय इदं, न मम। (अप उपस्पृश्य) शिष्टमाज्यं मूलेन त्रिरावृत्तेन ''सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयस्सप्त धाम प्रियाणि। सप्त होत्राः सप्त धात्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन स्वाहा। अग्नये सप्तवत इदं, न मम। (आज्यपात्रं उत्तरतो निदध्यात्।)

अदितेऽन्वमंस्थाः।(इति दक्षिणतः प्राचीनं परिषिञ्चति)

अनुमतेऽन्वमंस्थाः॥ (इति पश्चात् उदीचीनं)

सरस्वतेऽन्वमंस्थाः। (इति उत्तरतः प्राचीनं)

देवसवितः प्रासावीः। (इति समन्तात्)

हृदयादिन्यास दिग्बन्ध-ध्यान-लमित्यादि पूजा पुरः सरं १०८ वारं मूलमन्त्रं जपेत्। मूलेन १२ वारं जप्तेन क्षीरेण अग्निं तर्पयेत्, श्रीबालां तर्पयामि इति। श्री बाला पार्षदाभ्यो नमः इति बलिं दत्वा, अस्मात्कुंभात् अग्नेश्च श्रीबालां यथा स्थानं प्रतिष्ठापयामि इति तां हृदयं नयेत्। अग्निं उपतिष्ठते -अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम। अग्नये नमः।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन।
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते॥

प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै।
यानि तेषामशेषाणां श्रीकृष्णस्मरणं परम्॥ श्रीकृष्ण कृष्ण कृष्ण।

कायेन वाचा + समर्पयामि। अनेन होमेन भगवति सर्वात्मिका श्रीबाला प्रीयताम्। ओं तत्सत्। ब्रह्मार्पणमस्तु।

कुंभजलेन यजमानस्याभिषेकः, प्रोक्षणं वा। मूर्त्यादीनां यथा स्थानं निवेशः।

# श्री बालामानसपूजा

उद्यद्भानु सहस्रकान्तिमरुणक्षौमाम्बरालङ्कृतां
गन्धालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम्।
हस्ताब्जैर्दधतीं त्रिणेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमकुटां वन्देऽरविन्दस्थिताम्।।१

एणधराश्म कृतोन्नतधिष्ण्यं हेमविनिर्मितपादमनोज्ञम्।
शोणशिलाफलकं च विशालं देवि सुखासनमद्य ददामि।। २

ईशमनोहररूपविलासे शीतल चन्दन कुङ्कुममिश्रम्।
हृद्यसुवर्णघटे परिपूर्णं पाद्यमिदं त्रिपुरेशि गृहाण।। ३

लब्धभवत्करुणोऽहमिदानीं रक्तसुमाक्षतयुक्तमनर्घम्।
रुक्मविनिर्मित पात्रविशेषेष्वर्घ्यमिदं त्रिपुरेशि गृहाण।। ४

ह्रीमिति मन्त्रजपेन सुगम्ये हेमलतोज्ज्वल दिव्यशरीरे।
योगिमनः समशीतजलेन ह्याचमनं त्रिपुरेऽद्य विधेहि।। ५

हस्तलसत्कटकादि सुभूषाः आदरतोऽम्ब वरोप्य निधाय।
चन्दन वासितमन्त्रिततोयैः स्नानमयि त्रिपुरेशि विधेहि।। ६

सञ्चितमम्ब मया ह्यतिमूल्यं कुङ्कुमशोणमतीव मृदु त्वम्।
शङ्करतुङ्गतराङ्क निवासे वस्त्रयुगं त्रिपुरे परिधेहि।। ७

कन्दलदंशु किरीटमनर्घं कङ्कण कुण्डलनूपुरहारम्।
अङ्गदमङ्गुलिभूषणमम्ब स्वीकुरु देवि पुराधिनिवासे।। ८

हस्तलसद्वरभीतिहमुद्रे शस्ततरं मृगनाभि समेतम्।
सद्घनसारसुकुङ्कुममिश्रं चन्दनपङ्कमिदं च गृहाण।। ९

लब्धविकासकदम्बकजाती चम्पकपङ्कजकेतकयुक्तैः ।
पुष्यचयैर्मनसामुचितैस्त्वां अंब पुरेशि भवानि भजामि ।। १०

ह्रींपद शोभिमहामनुरूपे धूरसि मन्त्रवरेण मनोज्ञम् ।
अष्टसुगन्धरजःकृतमाद्ये धूपमिमं त्रिपुरेशि ददामि ।। ११

सन्तमसापहमुज्ज्वलपात्रे गव्यघृतैः परिवर्धितदेहम् ।
चम्पककुड्मलवृन्तसमानं दीपगणं त्रिपुरेऽद्य गृहाण ।। १२

कल्पितमद्य धियाऽमृतकल्पं दुग्धसितायुतमन्नविशेषम् ।
माषविनिर्मित पूपसहस्रं स्वीकुरु देवि निवेदनमाद्ये ।। १३

लंघितकेतकवर्णविशेषैः शोधितकोमल नागदलैश्च ।
मौक्तिकचूर्णयुतैः क्रमुकाद्यैः पूर्णतराऽम्ब पुरस्तव पात्री ।। १४

ह्रींत्रयपूरितमन्त्रविशेषं पञ्चदशीमपि षोडशरूपम् ।
सञ्चितपापहरं च जपित्वा मन्त्रसुमाञ्जलिमम्ब ददामि ।। १५

श्रीं पदपूर्णमहामनुरूपे श्रीशिवकाममहेश्वरहृद्ये ।
श्रीगुहवन्दित पाद पयोजे बालवपुर्धरदेवि नमस्ते ।। १६

## बालानी राजनम्

जय बाले त्रिपुरे जय बाले त्रिपुरे ।
द्वेधा विधृतशरीरे शिवशक्त्याकारे ।।

अरुणकिरणनिभासे बहुकृतविश्वासे ।
मौक्तिकशोभितनासे कमलमुकुल वासे ।।

निजशक्तिस्वविलासे दनुजकृत त्रासे ।
शशिवदनाधरहासे भक्तार्पितरासे ।।

इन्दुविराजितभाले करधृतजपमाले।
भक्तं रक्षसि बाले करपुस्तकजाले।।

इतराभशयशीले नाशितभवजाले।
रत्नविभूषितमाले खलजनकृतकाले।।

मुकुलाभस्तन भारे कण्ठार्पितहारे।
तारितभवाब्धिपारे श्रितमूलाधारे।।

कर्णीरथकृतचारे जयसि निराकारे।
कामेश्यङ्काधारे भक्तहृदयसञ्चारे।।

आदौ वाग्भवबीजे मध्ये क्लींबीजे।
अन्ते सुशक्तिबीजे क्रीडसि हृदि निर्बीजे।।

मञ्जीरध्वनिमण्डितमृदुतरशुभचरणे।
रमतां मम चित्तमिदं तव पूजन करणे।।

तव नीराजनकरणं भवसागरतरणम्।
बाले भव मम शरणं, बाले भव शरणम्।।

## बालाशताक्षरीमन्त्र विधानम्।

अस्य श्री बालाशताक्षरीमहामन्त्रस्य, ब्रह्मा ऋषिः। गायत्री छन्दः। बालात्रिपुरसुन्दरीदेवता। ध्यानं-

हरिपुरन्दरप्रभृति देवता मकुटविस्फुरत्किरण भास्वरम्।
नमत सन्ततं नमत सन्ततं त्रिपुरसुन्दरीचरण पङ्कजम्।।

मूलमन्त्रः- ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः वषट् सौः क्लीं श्रीं वौषट् ऐं क्लीं श्रीं सौः क्लीं ऐं ओं आं ह्रीं क्रों बालात्रिपुरसुन्दरि प्रसन्नवाग्वादिनि आश्रावय आश्रावय, आकर्षय आकर्षय, आवाहय

आवाहय, मां रक्ष रक्ष, सौभाग्यदायिनि स्वर्णाकर्षणमहालक्ष्मि धनं देहि देहि सर्वजनं मे वशमानय स्वाहा ।।

शताक्षरी शतानन्दी शतायुष्यविवर्धिनी ।
शतकोटि धनं देहि शङ्करी शान्त रूपिणी ।।

(बाला शताक्षरी अधो निर्दिष्टाभिरष्टभिः ऋग्भिः पृथग्योजिता जपे होमे च प्रशस्यते । क्रमस्त्वित्थम् -

1. हिरण्यवर्णां + आवह - शताक्षरी ।
2. संसमिद्युवसे + वसून्याभर - शताक्षरी ।
3. संगच्छध्वं + जानताम् - शताक्षरी ।
4. समानो मन्त्रः + जुहोति - शताक्षरी ।
5. समानीव आकूतिः + सुसहासति - शताक्षरी
6. श्रिये जातः + मितद्रौ - शताक्षरी
7. इन्द्र श्रेष्ठानि + त्वमह्नाम् - शताक्षरी
8. प्रजापते + रयीणां - शताक्षरी ।

ऋचो यथा-

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।।

सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इलस्पदे समिध्यसे स नो वसून्याभर ।।

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ।।

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥

समानी व आकूतिस्समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

श्रिये जातः श्रिय आनिरियाय श्रियं वयोजरितृभ्यो ददाति ।
श्रियं वसाना अमृतत्वमायन् भवँति सत्या समिथामितद्रौ ॥

इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषँ रयीणामरिष्टिं तनूनाँ स्वाद्मानँ वाचः सुदिनत्वमह्नाम् ।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाम् ॥

## श्रीबालासपर्यापद्धतिः

### विस्तृता तान्त्रिकी

श्रीमान् साधको ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरणमुखादि प्रक्षाल्य, बद्धपद्मासनः समुपविश्य स्वशिरः स्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं स्वशक्त्या सहितं ध्यात्वा, मानसोपचारैः संपूज्य दण्डवन्नत्वा, गुरूक्त-विधिना प्रातःकृत्यमजपाजपं च विधाय, स्वकार्यानुष्ठानाय भूमिं प्रार्थ्य श्वासानुसारेण तस्यां पादावुपन्यस्य, गृहाद्बहिर्निःसृत्य, नैर्ऋत्यां याम्यां वा दिशि मलमूत्रोत्सर्गशौचाचमनदन्तधावनादिकं विदध्यात् । नद्यादिं गत्वा वैदिकं सन्ध्यादि निर्वर्त्य तान्त्रिकमारभेत । तत्रादौ ४ऐं आत्मतत्त्वं शोधयामि स्वाहा । ४ क्लीं विद्यातत्त्वं शोधयामि स्वाहा । ४ सौः शिवतत्त्वं शोधयामि स्वाहा इति मूलयुक्ततत्त्वत्रयेणाचम्य, ह्रीं स्वाहा इत्यनेन वाऽऽचम्य, मूलं

स्मरन् मलापकर्षणस्नानं विधाय, पुनराचम्य अद्येत्यादिमासाद्युत्कीर्तनं विधाय, श्रीकुलदेवताप्रीतये तान्त्रिकविधिना स्नानमहं करिष्ये इति संकल्प्य, जले, त्रिकोणचक्रं विभाव्य सूर्यमण्डलात् ''ब्रह्मण्डोदर तीर्थानि'' ''गङ्गे च यमुने चैव'' इत्यादिनाङ्कुशमुद्रया तीर्थमावाह्य, पुरःकल्पिततीर्थे संयोज्याचम्य स्वात्मानं प्रोक्ष्य, मूलेन मृदा स्नपनं विधाय, मूलं पठन् पुरतःआवहितां स्वदेवतां त्रिरभिषिच्य, श्रवणादिसप्तच्छिद्राणि निरुध्य त्रिर्निमज्ज्य उन्मज्जोत्।

अथ संध्या । तत्र पूर्ववदाचम्य स्वमूलप्राणायामष्यादिकरषडङ्गं विधाय पूर्ववत्तीर्थमावाह्य, वामहस्ते तज्जलं निधाय दक्षहस्तेनाच्छाद्य यंरंवंलंहं इति पाञ्चभौतिकमन्त्रैः सप्तवारमभिमन्त्र्य, मूलविद्यया त्रिरभिमन्त्र्य, तज्जलबिन्दुभिर्वामाङ्गुष्ठानामिकाभ्यां मूलविद्यया स्वशिरस्त्रिः प्रोक्ष्य अवशिष्टजलं वामहस्ते निधाय, त्रिरभिमन्त्र्य मूलमुच्चरन् तत्त्वमुद्रया मूर्ध्नि सप्तधा मूलेन च त्रिधाभ्युक्ष्य, शेषं जलं दक्षहस्ते समादाय तेजोरूपं ध्यात्वा, इडया देहान्तःपापं प्रक्षाल्य, कृष्णवर्णं त ज्जलं पापरूपं पिङ्गलया विरिच्य वामे कल्पितवज्रशिलायां फडिति निःक्षिपेत्।

ततोऽर्घ्यं विधाय, ओं ह्रांह्रींसः श्रीमार्तण्डभैरवाय प्रकाशशक्तिसहिताय 'इदमर्घ्यं परिकल्पयामि स्वाहा' इति त्रिरर्घ्यं कुलसूर्याय दत्त्वा, हृत्पद्मात् सूर्यमण्डले मूलदेवीं नीत्वा तत्र विधिवद् ध्यात्वा, ऐं वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि सौः तन्नः शक्तिः प्रचोदयात्, इत्यनया मूलगायत्र्या चतसृषु संध्यासु सूर्यमण्डले मूलदेव्यै अर्घ्यं दत्त्वा यथाशक्ति जपेत्।

ततश्चतसृषु संध्यासु क्रमशो मूलाधार-हृत्कमल-भ्रूमध्य-ब्रह्मरन्ध्रेभ्यो देवीतेजः समाकृष्य इडया विरेच्य,

कल्पितवह्निसूर्यचन्द्रतारामण्डलेषु निक्षिप्य, तत्र बालयौवनप्रौढ-चिद्रूपां देवीं ध्यात्वा, ततः

ऐं त्रिपुरादेव्यै विद्महे वागीश्वर्यै धीमहि

तन्नो मुक्तिः प्रचोदयात्, इति प्रातः।

क्लीं त्रिपुरा-देव्यै विद्महे कामेश्वर्यै धीमहि

तन्नः क्लिन्ना प्रचोदथात्, इति मध्याह्ने।

सौः त्रिपुरादेव्यै विद्महे शक्तीश्वर्यै धीमहि

तन्नोऽमृते प्रचोदयात्, इति सायं।

ऐं वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि

सौः तन्नः शक्तिः प्रचोदयात्, इति अर्धरात्रे।

इति स्वस्वगायत्र्यार्घ्यं दत्त्वा यथाशक्ति स्वस्वगायत्रीं च जप्त्वा, पुनर्मूलगायत्रीं च जप्त्वा स्वस्वबीजाक्षरं सर्वं मूलं च जप्त्वा, प्राणायामादिना जपं समर्प्य मण्डलेभ्यो देवीतेजः स्वस्थाने, देवीं च हृद्यानीय ध्यायेदिति संध्याविधिः ॥

ततस्तर्पणम् । तत्र पूर्ववदाचम्य प्राणायामादि कृत्वा तीर्थमावाह्य, मूलेन जलं सप्तधा अमृतमुद्रया अमृतीकृत्य, तत्र जले यन्त्रं ध्यात्वा, तत्र देवीं हृदयात् सपरिवारामानीय, षडङ्गयोगेन सकलीकृत्य कुण्डलिन्याः प्रयोगेणामृतेनाभिषिच्य, विधिवत् प्रपूज्य, ऐशान्यां ४ श्रीकौलानन्दनाथभैरवस्तृप्यताम् इति त्रिः संतर्प्य, वह्नौ ४ परमगुरुं, नैर्ऋत्यां ४ परमाचार्यं, वायव्ये ४ परमेष्ठिगुरुं, त्रिः सकृद्वा संतर्प्य, दिव्यौघसिद्धौघमान-वौघानापि गुरून् संतर्प्य जले यन्त्रं विभाव्य, ४ कामेश्वरसहिता बालात्रिपुरा वागीश्वरी तृप्यतामिति त्रिः संतर्प्य परिवारानपि

संतर्प्य, प्राणायामादि विधाय देवीं स्वहृदि विसृजेत्। तीर्थं च स्वस्थाने विसृजेदिति तर्पणम्॥

ततो यागगेहमागत्य जलादिना द्वारदेवताः पूजयेत्। धात्रे नमः, विधात्रे नमः (दक्षे) गं गङ्गायै नमः। यं यमुनायै नमः। (वामे) द्वारश्रियै नमः। वास्तुपुरुषाय नमः (ऊर्ध्वे)। देहल्यै नमः इत्यधः संपूजयेत्। स्वासनमास्तीर्य 'ह्रीं आधारशक्तिकमलासनाय नमः' इति संपूज्य वीराद्यासनेनोपविश्य, ''पृथ्वि त्वया धृता लोकाः'' इत्यादिना पृथिवीं प्राथ्र्य, मण्डूकाय नमः, कालाग्निरुद्राय नमः। ह्रीं आधारशक्तिकमलासनाय नमः। ह्रींपीठासनाय नमः। इत्यासनं संपूज्य, तदुपरि समुपविश्य, संविदं यथामन्त्रं स्वीकुर्यात्।

तद्विधिर्यथा—

संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे।
ब्राह्मणानां च तृप्त्यर्थं पवित्रा भव सर्वदा॥

ब्राह्मण्यै नमः स्वाहा।

सिद्धमूल्यक्षये देवि हीनबोधप्रबोधिनि।
राजप्रजावशङ्करि शत्रुपक्षनिषूदिनि॥

ऐं क्षत्रियायै नमः स्वाहा।

अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्निब्रह्मरूपिणि।
आनन्दस्याहुतिं प्रीतिं सम्यग्ज्ञानं प्रयच्छ मे॥

ह्रीं वैश्यायै नमः स्वाहा।

नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि।
त्रैलोक्यविजये मातः समाधिविजया भव॥

क्लीं शूद्रायै नमः स्वाहा। इत्यभिमन्त्र्य,

''ओं अमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षय आकर्षय सिद्धिं देहि देहि त्रिपुरसुन्दरीपदं मे वशमानय वशमानय स्वाहा'' इति तदुपरि सप्तधा मूलं च जप्त्वा, धेनुयोनिमुद्रयाऽमृतीकृत्य आवाहनादिमुद्राः संदर्श्य, छोटिकाभिर्दिग्बन्धनं विधाय, सप्तधा त्रिधा वा श्रीगुरुं देवतां च संतर्प्य, ''ऐं वद वद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि स्वाहा'' इत्यनेन मुखे जुहुयात्। ततः आनन्दमयो भवति।

''अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।

ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।।

पाषण्ड कारिणो ये च भूता भूम्यन्तरिक्षगाः।

दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया।।

इति तर्जनीमध्यमाभ्यामूर्ध्वोर्ध्वं तालत्रयदानेन वामपार्ष्णिघात-त्रयेण दिव्यदृष्ट्या च त्रिविधविघ्नानुत्सार्य, छोटिकाभिर्दशदिग्-बन्धनं कृत्वा चतुर्दिक्षु वह्निप्राकारं संचिन्त्य प्राणायामं कुर्यात्।

तत्र प्रणवं षोडशवारमुच्चरन् दक्षाङ्गुष्ठेन दक्षनासापुटं निरुध्य वामेन पवनं पूरयेत्। ततस्तमेव चतुष्षष्टिवारमुच्चरन् दक्षानामाकनिष्ठिकाभ्यां वामं च पुटं निरुध्य द्वाभ्यां पवनं कुम्भयेत्। ततस्तमेव द्वात्रिंशद्वारमुच्चरन् वामं पुटं तथैव निरुध्य दक्षेण पवनं रेचयेदित्येकः प्राणायामः। एष एव विपर्ययेण द्वितीयः, प्रथमवत् तृतीयः। इति प्राणायामत्रयेण निरस्तसकलकलुषं स्वदेहं देवताराधनयोग्यं विभाव्य भूतशुद्धिं कुर्यात्।

अथ मूलाधाराद्धंस इति मन्त्रेण कुण्डलिनीं पृथिव्या सह स्वाधिष्ठानमानीय, तत्र जले पृथिवीं लीनां विभाव्य तस्माज्जलेन सह मणिपूरकं समानीय, तत्र वह्नौ जलं लीनं विभाव्य तस्माद्वह्निना सह अनाहतं समानीय, तत्र वायौ वह्निं लीनं विचिन्त्य, तस्माद्वायुना सह विशुद्धं समानीय, तत्रस्थाकाशे वायुं लीनं विचिन्त्य, तस्मादाकाशेन सह आज्ञाचक्रं समानीय, तत्र मनस्याकाशं लीनं विचिन्त्य, मनो नादे लीनं विभाव्य, ध्वनौ ध्वनिं समर्प्य, सहस्रदलकमलकर्णिकास्थचन्द्रमण्डलमध्य-गतत्रिकोणान्तर्गत-तेजोमयबिन्दुरूपपरमशिवे देवतां समर्प्य, प्राणायामविधिना यमिति वायुबीजं धूम्रवर्णं षोडशवारं जपन् शारीरं पापपुरुषं,

''वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्।।

सुरापानहृदा युक्तं गुरुत ल्पकटिद्वयम्।
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।।

उपपातकरोमाणं रक्तश्मश्रुविलोचनम्।
खड्गचर्मधरं क्रुद्धं पापं कुक्षौ विचिन्तयेत्।।''

इत्थं संशोष्य, रमिति वह्निबीजं रक्तवर्णं चतुष्षष्टिवारं जपन् तमेव संदह्य, वमित्यमृतबीजं शुक्लवर्णं सहस्रारे विचिन्त्य द्वात्रिंशद्वारं जपन् तदुद्भवामृतवृष्ट्या निष्पापं शरिरमुत्पाद्य, ललाटस्थ-लमिति पृथ्वीबीजेन पीतवर्णेन सुदृढीकृत्य, ह्रीमिति मूलस्थेन बीजेन सैश्वर्यं विधाय, सोहमिति मन्त्रेण कुण्डलिनीममृतलोलीभूतां पञ्चभूतानि जीवात्मानं च ब्रह्ममार्गेण स्वस्वस्थाने नियोजयेत्। ततो देवीरूपमात्मानं विचिन्त्य हृदि हस्तं निधाय प्राणप्रतिष्ठां कुर्यात्।

ओँ आंह्रींक्रों हंसः श्रीबालात्रिपुरायाः प्राणा इह प्राणाः । जीव इह स्थितः । ओँ सर्वेन्द्रियाणि इह स्थितानि । वाङ्मनश्चक्षुः श्रोत्रघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा'

इति प्राणप्रतिष्ठां विधाय, स्वमूलऋष्यादिचिन्तनं विदधीत ।

अस्य श्रीबालात्रिपुरामन्त्रस्य दक्षिणामूर्तिःऋषिः, पङ्क्तिश्छन्दः, श्रीबालात्रिपुरा देवता, ऐं बीजं, सौः शक्तिः, क्लीं कीलकं, पूजादौ विनियोगः इति कृताञ्जलिः स्मृत्वा यथाविधि न्यसेत् । दक्षिणामूर्तिऋषये नमः शिरसि, पङ्क्तिच्छन्दसे नमो मुखे, श्रीबालात्रिपुरादेवतायै नमो हृदि, ऐं बीजाय नमो गुह्ये, सौः शक्तये नमः पादयोः, क्लीं कीलकाय नमो नाभौ, विनियोगाय नमः सर्वाङ्गेषु ।

ऐं नमः (नाभ्यादिपादान्तं) । क्लीं नमः (कण्ठादिनाभ्यन्तं) । सौः नमः (मूर्धादिकण्ठान्तम्) ॥

ऐं नमः (वामपाणितले) क्लीं नमः (दक्षे) सौः नमः(उभयोः) ॥

द्रां क्षोभणबाणाय नमः (अङ्गुष्ठयोः), द्रीं द्रावणबाणाय नमः (तर्जन्योः), क्लीं आकर्षणबाणाय नमः (मध्यमयोः), ब्लूं वशीकरणबाणाय नमः (अनामिकयोः), इति बाणन्यासः ॥

सौः कामाय नमः (अङ्गुष्ठयोः), क्लीं मन्मथाय नमः (तर्जन्योः), ऐं कन्दर्पाय नमः (मध्यमयोः), ब्लूं मकरध्वजाय नमः (अनामिकयोः), स्त्रीं मीन केतवे नमः (कनिष्ठिकयोः), इति कामकरन्यासः ॥

अथ स्वमूलकरन्यासः । ऐं अङ्गुष्ठाभ्यां नमः, क्लीं तर्जनीभ्यां नमः, सौः मध्यमाभ्यां, नमः, ऐं अनामिकाभ्यां नमः, क्लीं

कनिष्ठिकाभ्यां नमः, सौः करतलपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ।

मातृकान्यासः ।

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृकासरस्वती देवता । हल्भ्यो बीजेभ्यो नमः, स्वरेभ्यः शक्तिभ्यो नमः, बिन्दुभ्यः कीलकेभ्यो नमः, मम श्रीविद्याङ्गत्वेन न्यासे विनियोगः ॥

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात् ॥ (७- ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः)

७ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः

७ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः

७ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः

७ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः

७ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः

७ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यासः । भूर्भुवस्सुवरोम् इति दिग्बन्धः ॥

ध्यानम् ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्थां-
अच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

लमित्यादि पञ्चपूजां कृत्वा।

## बहिर्मातृका

मातृकाः त्रितारीबालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषु न्यसेत्।

७ अं नमः हंसः (शिरसि)
७ आं ,, (मुखवृत्ते)
७ इं ,, (दक्षनेत्रे)
७ ईं ,, (वामनेत्रे)
७ उं ,, (दक्षकर्णे)
७ ऊं ,, (वामकर्णे)
७ ऋं ,, (दक्षनासापुटे)
७ ॠं ,, (वामनासापुटे)
७ ऌं ,, (दक्षकपोलं)
७ ॡं ,, (वामकपोले)
७ एं ,, (ऊर्ध्वोष्ठे)
७ ऐं ,, (अधरोष्ठे)
७ ओं ,, (ऊर्ध्वदन्तपंक्तौ)
७ औं ,, (अधोदन्तपंक्तौ)
७ अं ,, (जिह्वाग्रे) (मूर्ध्नि)
७ अः ,, (कण्ठे) (वक्त्रे)

७ कं ,, (दक्षबाहुमूले)
७ खं ,, (दक्षकूर्परे)
७ गं नमः हंसः (दक्षमणिबन्धे)
७ घं ,, (दक्षकराङ्गुलिमूले)
७ ङं ,, (दक्षकराङ्गुल्यग्रे)
७ चं ,, (वामबाहुमूले)
७ छं ,, (वामकूर्परे)
७ जं ,, (वाममणिबन्धे)
७ झं ,, (वामकराङ्गुलिमूले)
७ ञं ,, (वामकराङ्गुल्यग्रे)
७ टं ,, (दक्षोरुमूले)
७ ठं ,, (दक्षजानुनि)
७ डं ,, (दक्षगुल्फे)
७ ढं ,, (दक्षपादाङ्गुलिमूले)
७ णं ,, (दक्षपादाङ्गुल्यग्रे)
७ तं ,, (वामोरुमूले)

७ थं ,, (वामजानुनि) ७ धं ,, (वामपादाङ्गुलिमूले)

७ दं ,, (वामगुल्फे) ७ नं ,, (वामपादाङ्गुल्यग्रे)

७ पं नमः हंसः (दक्षपार्श्वे)

७ फं ,, (वामपार्श्वे)

७ बं ,, (पृष्ठे)

७ भं ,, (नाभौ)

७ मं ,, (जठरे)

७ यं ,, (हृदये)

७ रं ,, (दक्षकक्षे)

७ लं ,, (गलपृष्ठे)

७ वं ,, (वामकक्षे)

७ शं ,, (हृदयादिदक्षकराङ्गुल्यन्तं)

७ षं ,, (हृदयादिवामकराङ्गुल्यन्तं)

७ सं ,, (हृदयादिदक्षपादाङ्गुल्यन्तं)

७ हं ,, (हृदयादिवामपादाङ्गुल्यन्तं)

७ ळं ,, (कट्यादिपादाङ्गुल्यन्तं)

७ क्षं ,, (कट्यादिब्रह्मरन्ध्रान्तं)

अन्तर्मातृका।

७ अं नमः हंसः, आं नमः हंसः ++ अः नमः हंसः ॥

कण्ठे विशुद्धिचक्रे षोडशदलकमले ॥

७ कं नमः हंसः, खं नमः हंसः + + ठं नमः हंसः ।।

हृदये अनाहते द्वादशदलकमले ।।

७ डं नमः हंसः, ढं नमः हंसः + + फं नमः हंसः ।।

नाभौ मणिपूरे दशदलकमले ।।

७ बं नमः हंसः, भं नमः हंसः + + लं नमः हंसः ।।

लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ।।

७ वं नमः हंसः, शं नमः हंसः + + सं नमः हंसः ।।

गुदोपरि मूलाधारे चतुर्दलकमले ।।

७ हं नमः हंसः, क्षं नमः हंसः ।। भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले ।।

७ अं नमः हंसः, आं नमः हंसः + + क्षं नमः हंसः ।।

(५० वर्णाः) मूर्ध्नि सहस्रारे ।।

ऐं नमः मणिबन्धे, क्लीं नमः तले, सौः अग्रे, इति दक्षकरे । एवं वामकरे । ऐं नमः कक्षे, क्लीं कूर्परे, सौः पाणौ, इति दक्षे । एवं वामेऽपि । ऐं नमः अधः कक्षे, क्लीं जानुनि, सौः पादाग्रे इति दक्षे । एवं वामे । ऐं नमो लिङ्गे, क्लीं हृदि, सौः नादान्ते, इति विद्यान्यासः

नवयोनिन्यासः । ऐं दक्षकर्णे, क्लीं वामे, सौः चिबुके, ऐं दक्षशङ्खे, क्लीं वामे, सौः मुखे, ऐं दक्षनेत्रे, क्लीं वामे, सौः नासायां , ऐं दक्षबाहौ, क्लीं वामे, सौः कुक्षौ, ऐं दक्षजानुनि, क्लीं वामे, सौः नाभौ, ऐं दक्षपादे, क्लीं वामे, सौः गुह्ये, ऐं दक्षपार्श्वे, क्लीं वामे, सौः हृदि, ऐं दक्षस्तने, क्लीं वामे, सौः कण्ठे

रत्यादिन्यासः । (मूलाधारे) ऐं रत्यै नमः, (हृदि) क्लीं प्रीत्यै नमः । (भ्रूमध्ये) सौः मनोभवायै नमः । (मूलाधारे) सौः अमृतेश्यै

नमः, (हृदि) क्लीं योगेश्यै नमः (भ्रूमध्ये) ऐं विश्वयोन्यै नमः । ऐं हृदयाय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट्, ऐं कवचाय हुम् । क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट्, । इति न्यासैर्देहं संनह्य,

'' मूलाधारे मूलविद्यां विद्युत्कोटिसमप्रभाम् ।।

सूर्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम् ।
बिसतन्तुस्वरूपां तां बिन्दुत्रिवलयां प्रिये ।
ऊर्ध्वशक्तिनिपातेन सहजेन वरानने ।।

मूलशक्तिदृढत्वेन मध्यशक्तिप्रबोधतः ।
परमानन्दसंदोहसानन्दं चिन्तये परम् ।।''

इत्यन्तर्यजनं कृत्वा पीठपूजां न्यासेन स्वदेहे कुर्यात् ।

आत्मनि पीठपूजा (मूलाधारे) आधारशक्तये नमः, प्रकृत्यै नमः, (स्वाधिष्ठाने) कमठाय नमः, (मणिपूरे) शेषाय नमः, (अनाहते) पृथिव्यै नमः, सुधाम्बुधये नमः । मणिद्वीपाय नमः, चिन्तामणिगृहाय नमः, रत्नवेदिकायै नमः, मणिपीठाय नमः ।(दिक्षु) नानामुनिगणेभ्यो नमः, नानादेवेभ्यो नमः । धर्माय नमः (दक्षांसे) । अधर्माय (दक्षकुक्षौ) । अज्ञानाय नमः । (दक्षपृष्ठे) । अवैराग्याय नमः (वामपृष्ठे) । अनैश्वर्याय (वामकुक्षौ) । शेषाय नमः । पद्माय नमः । प्रकृतिमयपत्रेभ्यो । विकृतिमयकेसरेभ्यो नमः । पञ्चाशद्वर्णभूषितकर्णिकायै नमः । सूर्यमण्डलाय नमः । सोममण्डलाय नमः । वह्निमण्डलाय नमः । सं सत्त्वाय नमः । रं रजसे नमः । तं तमसे । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । पत्रेषु वामायै । ज्येष्ठायै नमः । रौद्र्यै नमः । अम्बिकायै नमः । इच्छायै

नमः । ज्ञानदायै नमः । क्रियायै नमः । कुब्जिकायै नमः । चित्रायै नमः । विषघ्निकायै नमः । दूतयैं नमः । आनन्दायै नमः । मध्ये मनोन्मन्यै नमः । ऐं परायै । अपरायै नमः । परापरायै नमः । ह्सौं सदाशिवमञ्चपद्मासनाय नमः । परमशिवपर्यङ्काय नमः, इति पीठं न्यस्य तत्रैव हृदये श्रीबालां ध्यायेत् ।

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ।
भ्रमद्भ्रमरनीलाभ-धम्मिल्लामलपुष्पिणीम् । १

ब्रह्मरन्ध्रस्फुरद्भिन्न-मुखरेखाविराजिताम् ।
मुखरेखालग्नरत्नतिलकां मुकुटोज्ज्वलाम् ।। २

विशुद्धमुक्तावज्राढ्य-चन्द्ररेखाकिरीटिनीम् ।
भ्रमद्भ्रमरनीलाभ-नयनत्रयराजिताम् ।। ३

सूर्यभास्वन्महारत्नकुण्डलालङ्कृतां पराम् ।
शुक्राकारस्फुरन्मुक्ता - हारभूषणभूषिताम् ।। ४

ग्रैवेयाङ्गदपत्रालि-स्फुरत्कान्तिजितामृताम् ।
गङ्गातरङ्गकर्पूर-शुभ्राम्बरविराजिताम् ।। ५

श्रीखण्डवल्ली - सदृशबाहुवल्लीविराजिताम् ।
कङ्कणादिलसद्भूषा - मणिबन्धलसत्प्रभाम् ।। ६

रक्तोत्पलदलाकार - पादपल्लवशोभिताम् ।
नक्षत्रमात्रासङ्काश - मुक्तामञ्जीरमण्डिताम् ।। ७

वामेन पाणिनैकेन पुस्तकं चापरेण तु ।
अभयं च प्रयच्छन्तीं साधकानां वरानने ।। ८

अक्षमालां च वरदं दक्षपाणिद्वयेन तु ।
दधतीं भावये देवीं वश्यसौभाग्यवाक्प्रदाम् ।
क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मराम्यहम् ।।

इति श्री बालात्रिपुरां ध्यात्वा मानसोपचारैराराध्य मनसा यथाशक्ति जपहोमादिकं च कृत्वा ,

''धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुवा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहं स्वाहा ।।''

कामकलां विचिन्त्य तदुपरि श्रीबालां यथोक्तां ध्यायन्, स्ववामभागे षट्कोणान्तर्गतत्रिककोणद्वयबिन्दुबाह्यवृत्तचतुरश्रं कृत्वा स्वदक्षे त्रिकोणं वृत्तबिम्बं मण्डलं भूमौ विरच्य तत्राधारशक्तिं संपूज्य, तत्राधारं निक्षिप्य, तदुपर्यस्त्रमन्त्रेण शोधितं हृन्मन्त्रेण पूरितं पात्रं शङ्खादिकं वा संस्थाप्य तत्र 'गङ्गे च यमुने चैव' इत्यादिना तीर्थमावाह्य गन्धादीन् प्रणवेन निक्षिप्य, वह्निसूर्यसोमकलाभिः संपूज्य धेनुमुद्रां प्रदर्श्य स्वमन्त्रेण च संपूजयेदिति । विधिविहितसामान्यार्घ्योदकेन स्ववामे कृतमण्डलमभ्युक्ष्य, तत्र 'आधारशक्तिभ्यो नमः' इत्यादि पीठपूजाक्रमेण संपूज्य, नमः इत्याधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य, ''रं वह्निमण्डलाय दशकलात्मने नमः'' इति प्रपूज्य, फडिति कलशं प्रक्षाल्य, कारणेन प्रपूर्य रक्तवस्त्रमाल्यादिना संभूष्य देवीबुद्ध्या संस्थाप्य, ''अं अर्कमण्डलाय द्वादशकलात्मने नमः'' इति कलशे संपूज्य, ओं चन्द्रमण्डलाय षोडशकलात्मने नमः'' इति द्रव्ये संपूज्य, फडिति संरक्ष्य हुमित्यवगुण्ठ्य मूलेन संवीक्ष्य नमः इत्यभ्युक्ष्य मूलेन गन्धमाघ्राय, कुम्भे पुष्पं दत्त्वा शापमोचनं कुर्यात् ।

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ।।

सूर्यमण्डलसंभूते वरुणालयसंभवे ।
अमाबीजमयि देवि शुक्रशापाद्विमुच्यताम् ।।

वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि।
तेन सत्येन देवेशि ब्रह्महत्यां व्यपोहतु॥

पवमानः परानन्दः पवमानः परो रसः।
पवमानं परं ज्ञानं तेन ते पावयाम्यहम्॥

कृष्णशापविनिर्मुक्ता त्वं मुक्ता ब्रह्मशापतः।
विमुक्ता रुद्रशापेन पवित्रा भव साम्प्रतम्॥

इति त्रिः पठित्वा ततः ओं वां वीं वूं वैं वौं वः ब्रह्मशापमोचितायै सुरादेव्यै नमः इत्यपि त्रिः। ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः सुराकृष्णशापं मोचय मोचय अमृतं स्रावय स्रावय स्वाहा इति त्रिः।

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

इत्यपि त्रिः पठित्वा आनन्दभैरवं सुरादेवीं च तत्र ध्यात्वा हसरक्षमलवयऊं आनन्दभैरवाय वौषट्, सहक्षमलवरयऊं सुरादेव्यै वौषट्' इति देवदेव्यौ त्रिः संपूज्य द्रव्यमध्ये दक्षिणावर्तेन त्रिः पङ्क्त्या अं (१६) कं (१६) थं (१६) इति शक्तिचक्रं विलिख्य तन्मध्ये हं क्षं च, तत्समावेशाद् द्रव्यमध्येऽमृतं विचिन्त्य, धेनुमुद्रया अमृतीकृत्य वमिति सुधाबीजं मूलमप्यष्टधा घटं धृत्वा पठित्वा, आत्मश्रीचक्रयोर्मध्ये त्रिकोणषट्कोणवृत्तचतुरस्रं विलिख्य, चतुरश्रे पूर्णगिरिपीठाय नमः, उड्डीयानपीठाय नमः, कामरूपीठाय नमः, जालन्धरपीठाय नमः, इति संपूज्य, षट्कोणे षडङ्गं संपूज्य, त्रिखण्डेन त्रिकोणाग्रदक्षोत्तरं संपूज्य, मध्ये आधारशक्तीः संपूज्य त्रिकोणगर्भे यन्त्रिकां संस्थाप्य नमः इति सामान्यार्घ्यजलेनाभ्युक्ष्य यं धूम्रार्चिषे नमः। रं ऊष्मायै नमः। लं ज्वलिन्यै नमः। वं ज्वालिन्यै नमः। शं विस्फुलिङ्गिन्यै नमः। षं

सुश्रियै नमः । सं स्वरूपायै नमः । हं कपिलायै नमः ।लं हव्यवाहायै नमः । क्षं कव्यवाहायै नमः । मध्ये रं वह्निमण्डलाय दशकलात्मने नमः । इति संपूज्य, षट्कोणे षडङ्गं संपूज्य, मध्ये मूलेन देवीं संपूज्य, पात्रं फडिति प्रक्षाल्य, यन्त्रिकोपरि संस्थापयेत्। तत्र।

कं भं तपिन्यै नमः । खं बं तापिन्यै नमः । गं फं धूम्रायै नमः । घं पं मरीच्यै नमः । ङं नं ज्वलिन्यै नमः । चं धं रुच्यै नमः । छं दं सुषुम्नायै नमः । जं थं भोगदायै नमः । झ तं विश्वायै नमः । ञं णं बोधिन्यै नमः । टं ढं धारिण्यै नमः । ठं डं क्षमायै नमः । अं अर्कमण्डलाय द्वादशकलात्मने नमः ।

इति संपूज्य, त्रिकोणवृत्तषट्कोणं पात्रे विलिख्य समस्तव्यस्तमन्त्रेण संपूज्य, वरुणबीजं मूलं विलोममातृकां च पठन्, अमृतेन त्रिकोणं प्रपूर्य जलेन च भागमेकं प्रपूर्य तत्र सुगन्धादि निक्षिप्य,

अं अमृतायै नमः । आं मानदायै नमः । इं पूषायै नमः । ईं तुष्ट्यै नमः । उं पुष्ट्यै नमः । ऊं रत्यै नमः । ऋं धृत्यै नमः । ॠं शशिन्यै नमः । लृं चण्डिकायै नमः । ॡं कान्त्यै नमः । एं ज्योत्स्नायै नमः । ऐं श्रियै नमः । ओं प्रीत्यै नमः । औं अङ्गदायै नमः । अं पूर्णायै नमः । अः पूर्णामृतायै नमः । ओं सोममण्डलाय षोडशकलात्मने नमः ।

इति संपूज्य, पूर्ववन्मन्त्रं द्रव्ये विलिख्य त्रिकोणत्रिरेखायां अं आं इत्यादि क्षः इत्यन्तं मातृकां त्रिस्त्रिर्विलिख्य, मूलखण्डत्रयेण त्रिकोणं संपूज्य षट्कोणे षडङ्गं च, गङ्गेत्यादिना तीर्थमावाह्य, आनन्दभैरवभैरव्यौ स्वमन्त्रेण संपूज्य, पूर्वादितः,

ग्लूं गगनरत्नेभ्यो नमः । स्लूं स्वर्गरत्नेभ्यो नमः । म्लूं मर्त्यरत्नेभ्यो नमः । प्लूं पातालरत्नेभ्यो नमः । मध्ये न्लूं नागरत्नेभ्यो नमः ।

इति संपूज्य, निवेदन द्रव्यं संशोध्य हुमित्यवगुण्ठ्य अमृतीकृत्य, तालत्रयेण दिशः संबद्ध्य, तदुपरि सप्तधा मूलं संपूज्य तत्र देवीमावाह्य, तालत्रयेण दिग्बन्धनं विधाय अवगुण्ठ्यामृतीकृत्य, योनिमुद्रां प्रदर्श्य, ह्सौं नमः इति संपूज्य, शङ्खमुद्रां प्रदर्श्य षडङ्गेन सकलीकृत्य मत्स्यमुद्रया पात्रमासाद्य मूलं दशधा जप्त्वा पात्रं देवीरूपं विभावयेदिति ।

ततो देव्याज्ञामादाय घटसमीपे गुरुपात्रं ततः शक्तिपात्रं भोगपात्रं स्वपात्रं योगिनीपात्रं वीरपात्रं बलिपाद्यार्घ्याचमनीयपात्राणि संस्थाप्य, चर्वणयुतकारणेन तत्त्वमुद्रया श्रीपात्राद् बिन्दून् समुद्धृत्य, आनन्दभैरवं तर्पयामि नमः इति तन्मन्त्रेण त्रिः सन्तर्प्य, ततः श्रीगुरु श्रीमच्छ्री..... आनन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः इति त्रिः सन्तर्प्य, श्रीपात्रामृतेन मूलदेवीं सायुधां सवाहनां सपरिवारां तर्पयामि नमः इति सन्तर्पयेदिति कलशपूजाविधिः ।

अथ श्रीचक्रोपरि पीठपूजां पूर्ववद्विधाय श्रीबालां ध्यात्वा वायुबीजेन वामनासापुटेन देवीं स्वहृदयात् कुसुमाञ्जलावानीय श्रीचक्रे संस्थाप्य,

''देवेशि भक्तिसुलभे परिवारसमन्विते ।

यावत्त्वां पूजयिष्यामि तावद् देवि इहावह ॥'' इति पठित्वा, ७ श्रीकामेश्वरशिवशिवासहिते बालात्रिपुरे इहागच्छ आगच्छ, इह तिष्ठ तिष्ठ, इह संनिधेहि सन्निधेहि, संनिरुद्धा भव, सन्निरुद्धा भव,

मम सर्वोपचारसहितां पूजां गृहाण गृहाण इत्यावाहनादिमुद्राः प्रदर्श्य, प्राणप्रतिष्ठां श्रीचक्रे लेलिहानमुद्रया विधाय दशदिग्बन्धं कृत्वा अवगुण्ठ्य सकलीकृत्य परमीकृत्य, धेनुयोनिमुद्रे प्रदर्श्य वराभयपुस्तकाक्षमालाज्ञानाङ्कुशपाशचापबाणकपालकमलादिमुद्राः प्रदर्श्य, श्रीपात्रामृतेन सायुधां सवाहनां सपरिवारां सावरणां श्रीकामेश्वराङ्कमध्यस्थ कामेश्वर्यङ्क संस्थितां श्रीबालात्रिपुरां तर्पयामि नमः इति त्रिः सन्तर्प्य, पुनरपि मूलेन श्रीबालात्रिपुराश्रीपादुकां तर्पयामि नमः इति त्रिः सन्तर्प्य, मूलमुच्चार्य, एतत्पाद्यं श्रीकामेश्वरसहित श्रीबालात्रिपुरायै नमः पादयोः पाद्यम्। एवमर्घ्यं स्वाहा (हस्तयोः)। आचमनीयं मधुपर्कं च सुधा (मुखे) । स्नानीयं नमः (सर्वाङ्गे), इति सुस्नाप्य, शुद्धदुकूलेनाङ्गं प्रोंच्छ्य, विचित्रपटवस्त्रं कुङ्कुमकस्तूरीचन्दन-सिन्दूरमुकुट कुण्डलहारादिनानालङ्कारान् दत्त्वा पुनराचमनीयं दद्यात् । ततो मध्यमानामाङ्गुष्ठैः गन्धो नमः इति गन्धं, अङ्गुष्ठतर्जनीभ्यां पुष्पाणि वौषट् इति पुष्पैः संपूज्य, धूपपात्रं फडिति संपूज्य पुरतः स्थापयित्वा वामतर्जन्या संस्पृशन् श्रीपात्रामृतेन धूपं निवेदयामि इति निवेद्य, जगद्ध्वनिमन्त्रमातः स्वाहा इति घण्टां संपूज्य वामेन पाणिना तां वादयन्मध्यानामाङ्गुष्ठैर्धूपं धृत्वा गायत्रीं मूलमन्त्रं च पठन्,

"वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः।
आह्वानं सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥"

इति त्रिधोत्तोल्य देवीं धूपयेत्। ततो दीपं संमुखे संस्थाप्य पूर्ववत् प्रोक्षणपूजने कृत्वा वाममध्यमया दीपपात्रं स्पृशन् दीपं निवेदयामि इति निवेद्य पूर्ववत् घण्टां वादयन्, मध्यमानामामध्ये दीपपात्रमङ्गुष्ठेन धृत्वा दर्शयन्, गायत्रीं मूलं च पठन्,

७ ''सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।
स बाह्याभ्यान्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥''

इति दीपयेत् । ततः सुवर्णादिपात्रे कुङ्कुमेन वसुपत्रं चन्द्ररूपं चरुं कृत्वा मध्ये दीपमेकमष्टपत्रेषु दीपाष्टकं संस्थाप्य 'श्रीं सौः ग्लूं स्लूं ग्लूं प्लूं न्लूं सौः श्रीः रत्नेश्वर्यै नमः, इत्यभ्यर्च्य मूलेन चाभ्यर्च्य, स्थालकं मस्तकान्तमुद्धृत्य नववारं, मूलं च पठन्,

''समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥

इति चक्रमुद्रया नीराजयेत् । ततो नानानैवेद्यं सुवर्णादिपात्रे निक्षिप्य हुमित्यवगुण्ठ्य धेनुमुद्रयामृतीकृत्य, मूलं सप्तधा जप्त्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् मूलान्ते,

''हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥''

नैवेद्यं निवेदयामीति दक्षानामाङ्गुष्ठाभ्यामुत्सृजेत् । ततः पुनराचमनीयं दत्त्वा मूलान्ते कर्पूरादियुक्तताम्बूलं निवेदयामीति पूर्ववद् दद्यात् । सर्वेषामर्घ्यपात्रजलेनोत्सर्गः कार्यः । ततस्तत्त्वमुद्रया देवीं त्रिः सन्तर्प्य पूर्वोक्ताः मुद्राः प्रदर्श्य, योनिं हृदि, क्षोभिणीं मुखे, द्राविणीं भ्रूमध्ये, आकर्षिणीं ललाटे, वशिनीं ब्रह्मरन्ध्रे, आह्लादिनीं पञ्चमुद्रामयीं प्रदर्श्य, कृताञ्जलिः ''श्री बालात्रिपुरे आवरणानि ते पूजयामि'' इत्याज्ञां गृहीत्वावरण पूजामारभेत ।

तत्रादौ प्राग्योनिमध्ययोन्योरन्तराले गुरुपात्रे (त्रेण) .....आनन्दनाथ श्रीपादुकां पूजयामि नमस्तर्पयामि नमः । एवं परमगुरु श्री पादुकां पू । परमाचार्य श्री । परमेष्ठिगुरुश्री ।

दिव्यौघगुरुश्री । सिद्धौघ गुरुश्री । मानवौघगुरुश्री । पुनः स्वगुरुश्री । इति पूजयेत्तर्पयेच्च ।

आग्नेये हृदयश्रीपा । ईशाने शिरःश्रीपा । नैर्ऋते शिखाश्रीपा । वायव्ये कवच श्रीपा. । मध्ये नेत्र श्रीपा । दिक्षु चतुर्धा अस्त्रश्री । इति पूजयेत्तर्पयेच्च ।

ततस्त्रिकोणे आग्नेये ऐं रं रति श्रीपा । ईशाने क्लीं प्रीं प्रीति श्रीपा । अग्रकोणे सौः मं मनोभवा श्रीपा । इति पूजयेत्तर्पयेच्च ।

तत्रस्त्रिकोणस्यैवोत्तरे । द्रां क्षोभणबाणश्री । द्रीं द्रावणबाणश्री । क्लीं आकर्षणबाणश्री । ब्लूं वशीकरणबाणश्री । तदग्रे सः उन्मादनबाणश्री । इति संपूज्य सन्तर्प्य, तथैव तदुत्तरे । सौः कामश्री । क्लीं मन्मथश्री । तद्दक्षे ऐं कन्दर्पश्री । ब्लूं मकरध्वजश्री । अग्रे स्त्रीं मीनकेतुश्री । इति पूजयेत्तर्पयेच्च ।

ततोऽष्टयोनिषु पूर्वादितः । अनङ्गकुसुमाश्री । अनङ्गमेखलाश्री । अनङ्गमदनाश्री । अनङ्गमदनातुराश्री । सुभगाश्री । भगाश्री । भगसर्पिणीश्री । भगमालाश्री । इति पूजयेत्तर्पयेच्च ।

ततोऽष्टपत्रेषु पूर्वादितः । अं असिताङ्गभैरवश्री । आं ब्राह्मी श्री । इं रुरुभैरवश्री । ईं माहेश्वरीश्री । उं चण्डभैवरश्री । ऊं कौमारीश्री । ऋं क्रोधभैरवश्री । ॠं वैष्णवीश्री । लृं उन्मत्तभैरवश्री । ॡं वाराहीश्री । एं कपालिभैरवश्री । ऐं माहेन्द्रीश्री । ओं भीषणभैरवश्री । औं चामुण्डाश्री । अं संहारभैरवश्री । अः नारसिंही श्रीपा । इति पूजयेत्तर्पयेच्च ।।

ततो ग्रन्थिस्थानेषु पश्चिमादितः । कामरूपपीठश्री । मलयगिरिपीठश्री । कौलगिरिपीठश्री । कुलान्तकपीठश्री ।

चौहारपीठश्री । जालन्धरपीठन्धरश्री । उड्डीयानपीठश्री । देवकूटपीठश्री । इति पूजयेत्तर्पयेच्च ।।

ततो वृत्तमण्डले पश्चिमादित ऊर्ध्वमधश्च । हेरुकभैरवश्री । वेतालभैरवश्री । त्रिपुरान्तकभैरवश्री । अग्निजिह्वभैरवश्री । कालान्तकभैरवश्री । कपालिभैरवश्री । एकपादभैरवश्री । भीमरूपभैरवश्री । मलयभैरवश्री । हाकटेश्वरभैरवश्री । इति पूजयेत्तर्पयेच्च ।

ततश्चतुरस्रे पूर्वादितः । इन्द्रश्री । अग्निश्री । यमश्री । निर्ऋतिश्री । वरुणश्री । वायुश्री । कुबेरश्री । ईशानश्री । इन्द्रेशानयोर्मध्ये ब्रह्मश्री । वरुणराक्षसयोर्मध्ये विष्णुश्री । इति पूजयेत्तर्पयेच्च ।

ततस्तत्समीपे । वज्रश्री । शक्तिश्री । दण्डश्री । खड्गश्री । पाशश्री । ध्वजश्री । गदाश्री । त्रिशूलश्रीपादुकां पूजयामि त ।। ततश्चतुरश्रे पश्चिमे । वां वटुकाय नमो वटुकश्री । उत्तरे यां योगिनीभ्यो नमो योगिनीश्री । पूर्वे क्षां क्षेत्रपालाय नमः क्षेत्रपालश्री । दक्षे गां गणपतये नमः गणपतिश्री । इति पूजयेत्तर्पयेच्च ।ततो वायव्ये अष्टवसुभ्यो नमः, ईशाने द्वादशादित्येभ्यो नमः, आग्नेये एकादशरुद्रभ्यो नमः, नैऋते सर्वेभ्यो भूतेभ्यो नमः, इति पूजयेत्तर्पयेच्च । ततो देवीसमीपे दक्षहस्ते अक्षमालाश्री । वरश्री । तद्वामे पुस्तकश्री । अभयश्री, इति पूजयेत्तर्पयेच्च । पुनर्बिन्दौ मूलदेवीं पूर्ववत् संपूज्य सन्तर्प्य पुष्पाञ्जलित्रयेण संपूज्य नित्यहोममाचरेत् ।

तद्यथा अग्नौ चक्रं विभाव्य विलिख्य जले वा, प्राणाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, उदानाय स्वाहा,

समानाय स्वाहा, इति हुत्वा षडङ्गाहुतीः कुर्यात् । ततो मूलेन स्वदेव्यै हुत्वा, स्वहृदि विसृज्य ईशाने मण्डलं कृत्वा, वां वटुकाय नमः एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभास्वर त्रिनेत्र ज्वालामुख सर्वान् विघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा। आग्नेये। यां योगिनीभ्यो नमः।

''ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा।

ऊर्ध्वं पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवर्य्याः।।

यां योगिनीभ्योः फट् स्वाहा, इति योगिनीबलिः।।

नैऋते क्षां क्षीं क्षूं क्षैं क्षौं क्षः क्षेत्रपाल अलिबलिसहितं बलिं गृह्ण गृह्ण स्वाहा, इति क्षेत्रपालबलिः।।

वायव्ये गां गीं गूं गणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण गृह्ण स्वाहा, इति गणपतिबलिः।।

इत्थं बलिं विरच्य्य गुरुदेव्यौ ध्यायन् यथाशक्तिं जपं विधाय, पुनरपि प्राणायामष्यादिकराङ्गन्यासानन्तरं ''गुह्यातीति'' तर्पणेन तेजोरूपं जपफलं देवीवामहस्ते समर्प्य, कवचसहस्रनामस्तवपाठं पठित्वा साष्टाङ्गं प्रणिपत्य प्रदक्षिणीकृत्य सामयिकैः सह पूर्वोक्तरूपेण पात्रवन्दनं विधाय

''नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः।
अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा।।

इत्यादि पूर्वोक्तं शान्तिस्तोत्रं पठित्वा, ईशाने ''निर्माल्यवासिन्यै नमः'' इति निर्माल्यं त्यजेत्। ततः

'इतः पूर्वं जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा पञ्चचामुदरेण शिश्ना प्राणदेहधर्माधिकारतो यदुक्तं यत्कृतं तत्सर्वं मदीयं श्रीबालात्रिपुरार्पणमस्तु।

ताम्रादिपात्रेऽर्घ्यं धृत्वा 'ओं ह्रां ह्रीं सः सूर्य एष तेऽर्घः स्वाहा'' इत्यर्घ्यं सूर्याय दत्त्वा, अच्छिद्रमवधारयेत्। नैवेद्यादि बान्धवैः साकं भुक्त्वा स्वात्मानं कामकलारूपं भावयन् सुखं विहरेत्।

* * *

## देवि प्रसीद

देवि ! यातं वयः, कालो जरादूतः प्रतीक्षते।
अनुध्यायन् कर्म कृतं उदीक्षे जन्मसन्ततिम्।।

जन्मन्यस्मिन्मत्पितरौ बन्धवो गुरुसत्तमाः।
त्वदन्ति विद्याविनयशीलाढ्यं मामुपानयन्।।

स्मरामि सर्वदा देवि तानव्याजकृपार्द्रितान्।
एतज्जन्म कृतार्थं मे लब्धात्त्वत्पाद सेवनात्।।

देहो वाणी मनो धीश्च कृतार्था मम भाग्यतः।
विधेहि जीवितस्यान्ते त्वल्लग्ना वासनाः शुभाः।।

प्रसीद तत्त्वत्कृपया स्थिरत्वत्पदचिन्तनः।
प्रसन्नधीरसंमोहो नयेयं क्षणमन्तिमम्।।

लभेय जन्म यत्किञ्चित् यस्मिन्यायां त्वदन्तिकम्।
विन्देय तादृशांस्तान्वा देशिकान्मद्धिते रतान्।।

★ ★ ★

# श्री बालासहस्रनामस्तोत्रम् -१

श्रीदेव्युवाच—

भगवन्भाषिताशेषसिद्धान्त करुणानिधे।
बालात्रिपुरसुन्दर्याः मन्त्रनामसहस्रकम्॥ १

श्रुत्वा धारयितुं देव ममेच्छावर्ततेऽधुना।
कृपया केवलं नाथ तन्ममाख्यातुमर्हसि॥ २

ईश्वर उवाच—

मन्त्रनामसहस्रं ते कथयामि वरानने।
गोपनीयं प्रयत्नेन शृणु तत्वं महेश्वरि !॥ ३

गुरुवन्दनं, श्रीमहागणेशवन्दनं च।

अस्य श्रीबालात्रिपुरसुन्दरीदिव्यसहस्रनामस्तोत्र महामन्त्रस्य ईश्वरऋषिः- अनुष्टुप्छन्दः- श्रीबालात्रिपुरसुन्दरी देवता। ऐं बीजं- सौः शक्तिः- क्लीं कीलकम्। मम श्रीबालात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे सहस्रनाम स्तोत्रपारायणे विनियोगः॥ करन्यासः- ऐं अङ्गुष्ठाभ्यां नमः। क्लीं तर्जनीभ्यां नमः। सौः मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। क्लीं कनिष्ठिकाभ्यां नमः। सौः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

ध्यानम्—

ऐंकारासनगर्भितानलशिखां सौः क्लीं कलां बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतान्तरङ्गोज्ज्वलाम्।
वन्दे पुस्तकपाशसांकुशजपस्रग्भासुरोद्यत्करां
तां बालां त्रिपुरां भजे त्रिनयनां षट्चक्रसञ्चारिणीम्॥ ४

लमित्यादि पञ्चपूजा।

ओं-सुभगा सुन्दरी सौम्या सुषुम्ना सुखदायिनी।
मनोज्ञा सुमना रम्या शोभना ललिता शिवा॥ ५

कान्ता कान्तिमती कान्तिः कामदा कमलालया।
कल्याणी कमला हृद्या पेशला हृदयङ्गमा॥ ६

सुभद्राख्यातिरमणी सर्वा साध्वी सुमङ्गला।
रामा भव्यवती भव्या कमनीयाऽतिकोमला॥ ७

शोभाभिरामा रमणी रमणीया रतिप्रिया।
मनोन्मनी महामाया मातङ्गी मदिराप्रिया॥ ८

महालक्ष्मीर्महाशक्तिर्महाविद्यास्वरूपिणी।
महेश्वरी महानन्दा महानन्दविधायिनी॥ ९

मानिनी माधवी माध्वी मदरूपा मदोत्कटा।
आनन्दकन्दा विजया विश्वेशी विश्वरूपिणी॥ १०

सुप्रभा कौमुदी कान्ता बिन्दुनादस्वरूपिणी।
कामेश्वरी कामकला कामिनी कामवर्धिनी॥ ११

भेरुण्डा चण्डिका चण्डी चामुण्डी मुण्डमालिनी।
अणुरूपा महारूपा भूतेशी भुवनेश्वरी॥ १२

चित्रा विचित्रा चित्राङ्गी हेमगर्भस्वरूपिणी।
चैतन्यरूपिणी नित्या नित्यानित्यस्वरूपिणी॥ १३

[1]ह्रींकारी कुण्डली धात्री विधात्री भूतसम्प्लवा।
उन्मादिनी महामाली[2] सुप्रसन्ना सुरार्चिता॥ १४

---

*1.* ह्रीङ्कार कुण्डली *2.* महामारी

परमानन्दनिष्यन्दा परमार्थस्वरूपिणी।
योगीश्वरी योगमाता हंसिनी कलहंसिनी॥ १५

कला कलावती रक्ता सुषुम्नावर्त्मशालिनी।
विन्ध्याद्रिनिलया सूक्ष्मा हेमपद्मनिवासिनी॥ १६

बाला सुरूपिणी माया वरेण्या वरदायिनी।
विद्रुमाभा विशालाक्षी विशिष्टा विश्वनायिका॥ १७

वीरेन्द्रवन्द्या विश्वात्मा विश्वा विश्वादिवर्धिनी।
विश्वोत्पत्तिर्विश्वमाया विश्वाराध्या विकस्वरा॥ १८

मदस्विन्ना मदोद्भिन्ना मानिनी मानवर्धनी।
मालिनी मोदिनी मान्या मदहस्ता मदालया॥ १९

मदनिष्यन्दिनी माता मदिराक्षी मदालसा।
मदात्मिका मदावासा मधुबिन्दुकृताधरा॥ २०

मूलभूता महामूला मूलाधारस्वरूपिणी।
सिन्दूररक्ता रक्ताक्षी त्रिनेत्रा त्रिगुणात्मिका॥ २१

वशिनी वाशिनी वाणी वारुणी वारुणीप्रिया।
अरुणा तरुणार्काभा भामिनी वह्निवासिनी॥ २२

सिद्धा सिद्धेश्वरी सिद्धिस्सिद्धाम्बा सिद्धमातृका।
सिद्धार्थदायिनी विद्या सिद्धाढ्या सिद्धसम्मता॥ २३

वाग्भवा वाक्प्रदा वन्द्या वाङ्मयी वादिनी परा।
त्वरिता सत्वरा तुर्या त्वरयित्री त्वरात्मिका॥ २४

कमला कमलावासा सकला सर्वमङ्गला।
भगोदरी भगक्लिन्ना भगिनी भगमालिनी॥ २५

भगप्रदा भगानन्दा भगेशी भगनायिका।
भगात्मिका भगावासा भगा भगनिपातिनी ॥ २६

भगावहा भगाराध्या भगाढ्या भगवाहिनी।
भगनिष्यन्दिनी भर्गा भगाभा भगगर्भिणी ॥ २७

भगादिर्भगभोगादिः भगवेद्या भगोद्भवा।
भगमाता भगाभोगाऽभगवेद्या ऽभगोद्भवा ॥ २८

भगमाता भगाकारा[1] भगगुह्या भगेश्वरी।
भगदेहा भगावासा भगोद्भेदा भगालसा ॥ २९

भगविद्या भगक्लिन्ना भगलिङ्गा भगद्रवा।
सकला निष्कला काली कराली कलभाषिणी ॥ ३०

कमला हंसिनी काला करुणा करुणावती।
भास्वरा भैरवी भासा भद्रकाली कुलाङ्गना ॥ ३१

रसात्मिका रसावासा रसस्यन्दा रसावहा।
कामनिष्यन्दिनी काम्या कामिनी कामदायिनी ॥ ३२

विद्या विधात्री विविधा विश्वधात्री[2] विधाविधा।
सर्वाङ्गसु[3]न्दरी सौम्या लावण्य[4]सरिदम्बुधिः ॥ ३३

चतुराङ्गी चतुर्बाहुश्चतुरा चारुहंसि[5]नी।
मन्त्रा मन्त्रमयी माता मणिपूरसमाश्रया ॥ ३४

मन्त्रात्मिका मन्त्रमाता मन्त्रगम्या सुमन्त्रिता[6]
पुष्पबाणा पुष्पजेत्री पुष्पिणी पुष्पवर्धिनी ॥ ३५

---

1. भगकृता 2. त्रिविधा विधा 3. सर्वाङ्गा सुन्दरी
4. लावण्या 5. चारुहासिनी 6. सुमन्त्रका

वज्रेश्वरी वज्रहस्ता पुराणी पुरवासिनी।
तारा [1]सुतरुणी तारा तरुणीताररूपिणी।। ३६

इक्षुचापा महापाशा शुभदा प्रियवादिनी।
सर्वदा[2] सर्वजननी सर्वार्था सर्वपावनी।। ३७

आत्मविद्या महाविद्या ब्रह्मविद्या विवस्वती।
शिवेश्वरी शिवाराध्या शिवनाथा शिवात्मिका।। ३८

आत्मिका[3] ज्ञाननिलया निर्भेदा निर्वृतिप्रदा।
निर्वाणरूपिणी नित्या[4] नियमा निष्कला प्रभा।। ३९

श्रीफला श्रीप्रदा शिष्या श्रीमयी शिवरूपिणी।
क्रूरा कुण्डलिनी कुब्जा कुटिला कुटिलालका।। ४०

महोदया महारूपा महामा[5]या कलामयी।
वशिनी सर्वजननी चित्रवासा विचित्रका।। ४१

सूर्यमण्डलमध्यस्था स्थिरा शङ्करवल्लभा।
सुरभिस्सुमन[6]स्सूर्या सुषुम्ना सोमभूषणा।। ४२

सुधाप्रदा सुधाधारा सुश्रीस्सम्पत्तिरूपिणी।
अमृता सत्यसङ्कल्पा सत्या षड् ग्रन्थिभेदिनी।। ४३

इच्छाशक्तिर्महाशक्तिः क्रियाशक्तिः प्रियङ्करी।
लीला लीलालयाऽऽनन्दा सूक्ष्मबोधस्वरूपिणी।। ४४

सकला रसना सारा सारगम्या सरस्वती।
परा परायणी पद्मा परनिष्ठा परापरा।। ४५

1. च तरुणाकारा 2. सर्वगा 3. आत्मिकज्ञान
4. पूर्णा 5. मही माही 6. सुमहस्सूर्या

श्रीमती श्रीकरी व्योम्नी शिवयोनिः शिवेक्षणा।
निरानन्दा निराख्येया निर्द्वन्द्वा निर्गुणात्मिका॥ ४६

बृहती ब्राह्मणी ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी।
धृतिः स्मृतिः श्रुतिर्मेधा श्रद्धा पुष्टिः स्तुतिर्मतिः॥ ४७

अद्वयाऽऽनन्दसम्बोधा वरा सौभाग्यरूपिणी।
निरामया निराकारा जृम्भिणी स्तम्भिनी रतिः॥ ४८

बोधिका कमला रौद्री द्राविणी क्षोभिणी मतिः।
कुचेली कुचमध्यस्था मध्यकूट गतिः प्रिया॥ ४९

कुलोत्तीर्णा कुलवती बोधा वाग्वादिनी सती।
उमा प्रियव्रता लक्ष्मीर्वकुळा कुलरूपिणी॥ ५०

विश्वात्मिका विश्वयोनिः विश्वासक्ता विनायका।
ध्यायिनी नादिनी तीर्था शङ्करी[1] मन्त्रसाक्षिणी॥ ४१

सन्मन्त्ररूपिणी हृष्टा शाङ्करी सुरशङ्करी।
सुन्दराङ्गी सुरावासा सुरवन्द्या सुरेश्वरी॥ ५२

सुवर्णवर्णा[2] सत्कीर्तिः सुवर्णा वर्णरूपिणी।
ललिताङ्गी वरिष्ठा श्रीरस्पन्दा स्पन्दरूपिणी॥ ५३

शाम्भवी सच्चिदानन्दा सच्चिदानन्दरूपिणी।
जयिनी विश्वजननी विश्वनिष्ठा विलासिनी॥ ५४

भ्रूमध्याखिलनिष्पाद्या निर्गुणा गुणवर्धिनी।
हृल्लेखा भुवनेशानी[3] भुवना भुवनात्मिका॥ ५५

विभूतिर्भूतिदा भूतिः संभूतिर्भूतिकारिणी।
ईशानी शाश्वती शैवी शर्वाणी शर्मदायिनी॥ ५६

---

1. शाङ्करी 2. सुवर्णा वर्णसत्कीर्तिः 3. भवना भवनात्मिका

भवानी भावगा भावा भावना भावनात्मिका।
हृत्पद्मनिलया शूरा स्वरावृत्तिः स्वरात्मिका॥ ५७

सूक्ष्मरूपा परानन्दा स्वात्मस्था विश्वदा शिवा।
परिपूर्णा दयापूर्णा मदघूर्णितलोचना॥ ५८

शरण्या तरुणार्काभा मधुरक्ता मनस्विनी।
अनन्ताऽनन्तमहिमा नित्यतृप्ता निरञ्जना॥ ५९

अचिन्त्या शक्तिचिन्त्यार्था[1] चिन्त्या चिन्त्यस्वरूपिणी।
जगन्मयी जगन्माता जगत्सारा जगद्भवा॥ ६०

आप्यायिनी परानन्दा कूटस्थाऽऽवासरूपिणी।
ज्ञानगम्या ज्ञानमूर्तिः ज्ञापिनी ज्ञानरूपिणी॥ ६१

खेचरी खेचरीमुद्रा खेचरीयोगरूपिणी।
अनाथनाथा निर्नाथा घोराऽघोरस्वरूपिणी॥ ६२

सुधाप्रदा सुधाधारा सुधारूपा सुधामयी।
दहरा दहराकाशा दहराकाशमध्यगा॥ ६३

माङ्गल्या मङ्गलकरी महामाङ्गल्यदेवता।
माङ्गल्यदायिनी मान्या सर्वमङ्गलदायिनी॥ ६४

स्वप्रकाशा महाभासा[2] भामिनी भवरूपिणी।
कात्यायनी कलावासा पूर्ण[3]कामा यशस्विनी॥ ६५
[4]अर्थावसाननिलया नारायणमनोहरा।

मोक्षमार्गविधानज्ञा विरिंचोत्पत्तिभूमिका॥ ६६
अनुत्तरा महाराध्या दुष्प्रापा दुरतिक्रमा।

---

*1.* शक्तिश्चिन्त्या *2.* महाभूषा *3.* पूर्णा कामा *4.* अर्धाऽवसाननिलया

शुद्धिदा कामदा सौम्या ज्ञानदा मानदायिनी ।। ६७
स्वधा स्वाहा सुधा मेधा मधुरा मधुमन्दिरा ।

निर्वाणदायिनी श्रेष्ठा शर्मिष्ठा शारदार्चिता ।। ६८
सुवर्चला सुराराध्या शुद्धसत्वा सुरार्चिता ।

स्तुतिः स्तुतिमयी स्तुत्या स्तुतिरूपा स्तुतिप्रिया ।। ६९
कामेश्वरी कामवती कामिनी कामरूपिणी ।

आकाशगर्भा ह्रींकारी कंकाली कालरूपिणी ।। ७०
विष्णुपत्नी विशुद्धार्था विश्वरूपेशवन्दिता ।

विश्ववेद्या महावीरा विश्वघ्नी विश्वरूपिणी ।। ७१
कुश[1]लाढ्या शी[2]लवती शैलस्था शैलरूपिणी ।

रुद्राणी चण्डी[3] खट्वाङ्गी डाकिनी साकिनी प्रभा ।। ७२
नित्या निर्वेदखट्वांगी जननी जनरूपिणी ।

तलोदरी जगत्सूत्री जगती ज्वलिनी ज्वली ।। ७३
साकिनी सारसंहृद्या सर्वोत्तीर्णा सदाशिवा ।

स्फुरन्ती स्फुरिताकारा स्फूर्तिस्स्फुरणरूपिणी ।। ७४
शिवदूती शिवा शिष्टा शिवज्ञा शिवरूपिणी ।

रागिणी रञ्जनी रम्या रजनी रजनीकरा ।। ७५
विश्वम्भरा विनीतेष्टा विधात्री विधिवल्लभा ।

विद्योतनी विचित्रार्था विश्वाद्या विविधाभिधा ।। ७६
विश्वाक्षरा सरसिका विश्वस्थाऽतिविचक्षणा ।

ब्रह्मयोनिर्महायोनिः कर्मयोनिस्त्रयीतनुः ।। ७७
हाकिनी हारिणी सौम्या रोहिणी रोगनाशनी ।

---

*1.* सुशीलाढ्या *2.* शैलवती *3.* चण्डखट्वाङ्गी

श्रीप्रदा श्रीश्रीधरा च श्रीकरा श्रीमती प्रिया[1] ।। ७८
[2]श्रीमती श्रीकरी श्रेयान् श्रेयसी च[3] सुरेश्वरी ।
कामेश्वरी कामवती कामगिर्यालयस्थिता ।। ७९
रुद्रात्मिका रुद्रमाता रुद्रगम्या रजस्वला ।
अकारषोडशान्तस्था [4]भैरवी ह्लादिनी परा ।। ८०
कृपादेहाऽरुणा नाथा सुधाबिन्दुसमन्वि[5]ता ।
काली कामकला कन्या पार्वती पररूपिणी ।। ८१
मायावती घोरमुखी [6]नादिनी दीपिनी शिवा ।
मकारामृत[7]चक्रेशी महासेना विमोहिनी ।। ८२
उत्सुकाऽनुत्सुका हृष्टा ह्रीङ्कारी चक्रनायिका ।
रुद्रा भवानी चामुण्डी ह्रीङ्कारी सौख्यदायिनी ।।८३
गरुडा ग[8]रुडी कृष्णा[9] सकला ब्रह्मचारिणी ।
कृष्णाङ्गा वाहिनी कृष्णा खेचरी कमलाप्रिया ।। ८४
भद्रिणी रुद्रचामुण्डा ह्रीङ्कारी सौभगा ध्रुवा ।
गोरु[10]डी गारुडी ज्येष्ठा स्वर्गगा[11] ब्रह्मचा[12]रिणी ।। ८५
पानानुरक्ता पानस्था भीमरूपा भयापहा ।
रक्ता चण्डा सुरानन्दा त्रिकोणा पानदर्पिता ।। ८६
महोत्सुका क्रतुप्रीता कङ्काळी कालदर्पिता ।
सर्ववर्णा सुवर्णाभा परामृतमहार्णवा ।। ८७
योग्यार्णवा नागबुद्धिर्वीरपाना नवात्मिका ।

---

*1.* श्रीमतिः श्रिया *2.* श्रीमाता *3.* या *4.* भैरवाह्लादिनी
*5.* समाश्रिता *6.* वादिनी *7.* मातृचक्रेशी *8.* गारुडी
*9.* ज्येष्ठा *10.* गरुडी *11.* स्वर्गदा *12.* ब्रह्मवादिनी

द्वादशान्तसरोजस्था निर्वाणसुखदायिनी ॥ ८८
आदिसत्वा ध्यानसत्वा श्रीकण्ठस्वान्तमोहिनी ।
परा घोरा करालाक्षी स्वमूर्तिर्मेरुनायिका ॥ ८९
आकाशलिङ्गसम्भूता परामृतरसात्मिका ।
शाङ्करी शाश्वती रुद्रा कपाल[1]कुलदीपिका ॥ ९०
विद्यातनुर्मन्त्रतनुश्चण्डा मुण्डा सुदर्पिता ।
वागीश्वरी योगमुद्रा त्रिखण्[2]डा सिद्धमण्डिता ॥ ९१
शृङ्गारपीठनिलया काली मातङ्गकन्यका ।
संवर्तमण्डलान्तस्था भुवनोद्यानवासिनी ॥ ९२
पादुकाक्रमसंतृप्ता भैरवस्थाऽपराजिता ।
निर्वाणसौरभा दुर्गा महिषासुरमर्दिनी ॥ ९३
भ्रमराम्बा शिखरिका ब्रह्मविष्ण्वीशतर्पिता ।
उन्मत्तहेलारसिका योगिनी योगदर्पिता ॥ ९४
सन्तानानन्दिनी बीजचक्रा परमकारुणी ।
खेचरी नायिका योग्या परिवृत्तातिमोहिनी ॥ ९५
शाकम्भरी सम्भवित्री स्कन्दानन्दी मदार्पिता ।
क्षेमङ्करी सुमाश्वासा स्वर्गदा [3]बिन्दुकारुणी ॥ ९६
चर्चिता चर्चितपदा चारुखट्वाङ्गधारिणी ।
[4]असुरा मन्त्रितपदा भामिनी भवरूपिणी ॥ ९७
उषा सङ्कर्षिणी धात्री चोमा कात्यायनी शिवा ।
सुलभा दुर्लभा शास्त्री महाशास्त्री शिखण्डिनी ॥ ९८
योगलक्ष्मीर्भोगलक्ष्मीः राज्यलक्ष्मीः कपालिनी ।

1. कपाला 2. त्रिखण्डा 3. बिन्दुकारिणी 4. अघोरा

देवयोनिर्भगवती धन्विनी नादिनीश्वरी ॥ ९९

[1]मन्त्रात्मिका महाधात्री बलिनी केतुरूपिणी ।

सदानन्दा सदाभद्रा फल्गुनी रक्तवर्षिणी ॥ १००

मन्दारमन्दिरा तीव्रा ग्राहिका सर्वभक्षिणी ।

अग्निजिह्वा महाजिह्वा शूलिनी शुद्धिदा परा ॥ १०१

सुवर्णिका कालदूती देवी कालस्वरूपिणी ।

शङ्खि[2]नी [3]नयनी गुर्वी वाराही हुंफडात्मिका ॥ १०२

उग्रात्मिका पद्मवती धूर्जटी चक्रधारिणी ।

देवी तत्पुरुषा शिक्षा साध्वी[4] स्त्रीरूपधारिणी ॥ १०३

दक्षा दाक्षायणी दीक्षा मदना मदनातुरा ।

धिष्ण्या हिरण्या सरणिः धरित्री धररूपिणी ॥ १०४

वसुधा वसुधाच्छाया वसुधामा सुधामयी ।

शृङ्गिणी भीषणा सान्द्री प्रेतस्थाना मतङ्गिनी ॥ १०५

खण्डिनी योगिनी तुष्टिः नादिनी भेदिनी नदी ।

खट्वाङ्गिनी कालरात्रिः मेघमाला धरात्मिका ॥ १०६

भापीठस्था भवद्रपा महाश्रीर्धूम्रलोचना ।

सुखदा गन्धिनी बन्धुर्बान्धिनी बन्धमोचिनी ॥ १०७

सावित्री सत्कृतिः कर्त्री [5]चोमा माया महोदया ।

गन्धर्वी[6] सुगुणाकारा सद्गुणा गुणपूजिता ॥ १०८

निर्मला गिरिजा शब्दा शर्वाणी शर्मदायिनी ।

एकाकिनी सिन्धुकन्या काव्यसूत्रस्वरूपिणी ॥ १०९

---

1. क्षेत्रात्मिका 2. कुंभिनी, 3. शयनी

4. माध्वी, 5. क्षमा, 6. गणेश्वरी गणाकारा

अव्यक्तरूपिणी व्यक्ता योगिनी पीठरूपिणी।
निर्मदा धामदाऽऽदित्या नित्या सेव्याऽक्षरात्मिका ।। ११०

तपिनी तापिनी दीक्षा शोधिनी शिवदायिनी।
स्वस्ति स्वस्तिमती बाला कपिला विस्फुलिङ्गिनी ।। १११

अर्च्चिष्मती द्युतिमती कौलिनी कव्यवाहिनी।
जनाश्रिता विष्णुविद्या मानसी विन्ध्यवासिनी ।। ११२

विद्याधरी लोकधात्री सर्वा सारस्वरूपिणी।
पापघ्नी सर्वतोभद्रा त्रिस्था शक्तित्रयात्मिका ।। ११३

त्रिकोणनिलया त्रिस्था त्रयीमाता त्रयीपतिः[1]।
त्रयीविद्या त्रयीसारा त्रयीरूपा त्रिपुष्करा ।। ११४

त्रिवर्णा त्रिपुरा त्रिश्रीः त्रिमूर्तिस्त्रिदशेश्वरी।
त्रिकोणसंस्था त्रिविधा त्रिस्वरा त्रिपुराम्बिका ।। ११५

त्रिविधा[2] त्रिदिवेशानी त्रिस्था त्रिपुरदाहिनी।
जङ्घिनी स्फोटिनी स्फूर्तिः स्तम्भिनी शोषिणी प्लुता ।। ११६

ऐङ्काराख्या वामदेवी खण्डिनी चण्डदण्डिनी।
क्लीङ्कारी वत्सला हृष्टा सौःकारी मदहंसिका ।। ११७

वज्रिणी द्राविणी जैत्री श्रीमती गोमती ध्रुवा।
परतेजोमयी संवित्पूर्णपीठनिवासिनी ।। ११८

त्रिधात्मा त्रिदशाध्यक्षा त्रिघ्नी त्रिपुरमालिनी।
त्रिपुराश्रीस्त्रिजननी त्रिभूस्त्रैलोक्यसुन्दरी ।। ११९

कुमारी कुण्डली धात्री बाला भक्तेष्टदायिनी।
कलावती भगवती भक्तिदा भवनाशिनी ।। १२०

1. त्रयीतनुः 2. त्रिदिवा

सौगन्धिनी सरिद्वेणी पद्मरागकिरीटि नी।
तत्वत्रयी तत्वमयी मन्त्रिणी मन्त्ररूपिणी ।। १२१

सिद्धा श्रीत्रिपुरावासा बालात्रिपुरसुन्दरी।
बालात्रिपुरसुन्दर्या मन्त्रनामसहस्रकम् ।। १२२

कथितं देवदेवेशि सर्वमङ्गलदायकम्।
सर्वरक्षाकरं देवि सर्वसौभाग्यदायकम् ।। १२३

सर्वाश्रयकरं देवि सर्वानन्दकरं वरम्।
सर्वपापक्षयकरं सदा विजयवर्धनम् ।। १२४

सर्वदा श्रीकरं देवि सर्वयोगीश्वरीमयम्।
सर्वपीठ मयं देवि सर्वानन्दकरं परम् ।। १२५

सर्वदौर्भाग्यशमनं सर्वदुः खनिवारणम्।
सर्वाभिचारदोषघ्नं परमन्त्रविनाशनम् ।। १२६

परसैन्यस्तम्भकरं शत्रुस्तम्भनकारणम्।
महाचमत्कारकरं महाबुद्धिप्रवर्धनम् ।। १२७

महोत्पातप्रशमनं महाज्वरनिवारणम्।
महावश्यकरं देवि महासुखफलप्रदम् ।। १२४

एवमेतस्य मन्त्रस्य प्रभावो वर्णितुं मया।
न शक्यते वरारोहे कल्पकोटि शतैरपि ।। १२५

यः पठेत्सङ्गमे नित्यं सर्वदा मन्त्रसिद्धिदम् ।।

(विष्णुयामळे)

## ।। श्रीबालासहस्रनामावळिः ।।

ओं ऐं ह्रीं श्री सुभगायै नमः । सुन्दर्यै नमः । सौम्यायै नमः । सुषुम्नायै नमः । सुखदायिन्यै नमः । मनोज्ञायै नमः । सुमनसे नमः । रम्यायै नमः । शोभनायै नमः । ललितायै नमः । शिवायै नमः । कान्तायै नमः । कान्तिमत्यै नमः । कान्त्यै नमः । कामदायै नमः । कमलालयायै नमः । कल्याण्यै नमः। कमलायै नमः । हृद्यायै नमः । पेशलायै नमः । २०

हृदयङ्गमायै नमः । सुभद्राख्यायै[1] नमः । अतिरमण्यै नमः । सर्वस्यै नमः । साध्व्यै नमः । सुमङ्गलायै नमः । रामायै नमः । भव्यवत्यै नमः । भव्यायै नमः । कमनीयायै नमः । अतिकोमलायै नमः । शोभायै नमः ।[2] अभिरामायै नमः । रमण्यै नमः । रमणीयायै नमः । रतिप्रियायै नमः । मनोन्मन्यै नमः । महामायायै नमः । मातङ्ग्यै नमः । मदिराप्रियायै नमः । ४०

महालक्ष्म्यै नमः । महाशक्त्यै नमः । महाविद्यास्वरूपिण्यै नमः । महेश्वर्यै नमः । महानन्दायै नमः । महानन्दविधायिन्यै नमः । मानिन्यै नमः । माधव्यै नमः । माध्व्यै नमः । मदरूपायै नमः । मदोत्कटायै नमः । आनन्दकन्दायै नमः । विजयायै नमः । विश्वेश्यै नमः । विश्वरूपिण्यै नमः । सुप्रभायै नमः । कौमुद्यै नमः । कान्तायै[3] नमः । बिन्दुनादस्वरूपिण्यै नमः । कामेश्वर्यै नमः । ६०

कामकलायै नमः । कामिन्यै नमः । कामवर्धिन्यै नमः । भेरुण्डायै नमः । चण्डिकायै नमः । चण्ड्यै नमः । चामुण्डायै नमः । मुण्ड मालिन्यै नमः । अणुरूपायै नमः । महारूपायै नमः । भूतेश्यै नमः । भुवनेश्वर्यै नमः । चित्रायै नमः । विचित्रायै नमः । चित्रांग्यै

---

1. सुभद्रायै, ख्यात्यै, रमण्यै 2. शोभाभिरामायै 3. शान्तायै

नमः। हेमगर्भस्वरूपिण्यै नमः। चैतन्यरूपिण्यै नमः। नित्यायै नमः। नित्यानित्यस्वरूपिण्यै नमः। ह्रींकार्यै[1] नमः। ८०

कुण्डल्यै नमः। धात्र्यै नमः। विधात्र्यै नमः। भूतसम्प्लवायै नमः। उन्मादिन्यै नमः। महामाल्यै[2] नमः। सुप्रसन्नायै नमः। सुरार्चितायै नमः। परमायै[3] नमः। आनन्दनिष्यन्दायै नमः। परमार्थस्वरूपिण्यै नमः। योगीश्वर्यै नमः। योगमात्रे नमः। हंसिन्यै नमः। कलहंसिन्यै नमः। कलायै नमः। कलावत्यै नमः। रक्तायै नमः। सुषुम्नावर्त्मशालिन्यै[4] नमः। विन्ध्याद्रिनिलयायै नमः। १००

सूक्ष्मायै नमः। हेमपद्मनिवासिन्यै नमः। बालायै नमः। सुरूपिण्यै नमः। मायायै नमः। वरेण्यायै नमः। वरदायिन्यै नमः। विद्रुमाभायै नमः। विशालाक्ष्यै नमः। विशिष्टायै नमः। विश्वनायिकायै नमः। वीरेन्द्रवन्द्यायै नमः। विश्वात्मने नमः। विश्वायै नमः। विश्वादिवर्धिन्यै नमः। विश्वोत्पत्त्यै नमः। विश्वमायायै नमः। विश्वाराध्यायै नमः। विकस्वरायै नमः। मदस्विन्नायै नमः। १२०

मदोद्भिन्नायै नमः। मानिन्यै नमः। मानवर्धिन्यै नमः। मालिन्यै नमः। मोदिन्यै नमः। मान्यायै नमः। मदहस्तायै नमः। मदालयायै नमः। मदनिष्यदिन्यै नमः। मात्रे नमः। मदिराक्ष्यै नमः। मदालसायै नमः। मदात्मिकायै नमः। मदावासायै नमः। मधुबिन्दुकृताधरायै नमः। मूलभूतायै नमः। महामूलायै नमः। मूलाधारस्वरूपिण्यै नमः। सिन्दूररक्तायै नमः। रक्ताक्ष्यै नमः। १४०

त्रिनेत्रायै नमः। त्रिगुणात्मिकायै नमः। वशिन्यै नमः। वाशिन्यै नमः। वाण्यै नमः। वारुण्यै नमः। वारुणीप्रियायै नमः। अरुणायै नमः। तरुणार्काभा[5]यै नमः। भामिन्यै नमः। वह्निवासिन्यै

1. ह्रींकारकुण्डल्यै, 2. महामायै 3. परमानन्दनिष्यन्दायै

4. सुषुम्नायै, वर्त्मशालिन्यै 5. तरुणायै अर्काभायै।

नमः । सिद्धायै नमः । सिद्धेश्वर्यै नमः । सिद्ध्यै नमः । सिद्धाम्बायै नमः । सिद्धमातृकायै नमः । सिद्धार्थदायिन्यै नमः । विद्यायै नमः । सिद्धाढ्यायै नमः । सिद्धसम्मतायै नमः । १६०

वाग्भवायै नमः । वाक्प्रदायै नमः । वन्द्यायै नमः । वाङ् मय्यै नमः । वादिन्यै नमः । परायै नमः । त्वरितायै नमः । सत्वरायै नमः । तुर्यायै नमः । त्वरयित्र्यै नमः । त्वरात्मिकायै नमः । कमलायै नमः । कमलावासायै नमः । सकलायै नमः । सर्वमङ्गलायै नमः । भगोदर्यै नमः । भगक्लिन्नायै नमः । भगिन्यै नमः । भगमालिन्यै नमः । भगप्रदायै नमः । १८०

भगानन्दायै नमः । भगेश्यै नमः । भगनायिकायै नमः । भगात्मिकायै नमः । भगावासायै नमः । भगायै नमः । भगनिपातिन्यै नमः । भगावहायै नमः । भगाराध्यायै नमः । भगाढ्यायै नमः । भगवाहिन्यै नमः । भगनिष्यंदिन्यै नमः । भगयै नमः । भगाभायै नमः । भगगर्भिण्यै नमः । भगादये नमः । भगभोगादये नमः । भगवेद्यायै नमः । भगोद्भवायै नमः । भगमात्रे नमः । २००

भगाभोगायै नमः । अभगवेद्यायै नमः । अभगोद्भवायै नमः । भगमात्रे नमः । भगाका[1]रायै नमः । भगगुह्यायै नमः । भगेश्वर्यै नमः । भगदेहायै नमः । भगावासायै नमः । भगोद्भेदायै नमः । भगालसायै नमः । भगविद्यायै नमः । भगक्लिन्नायै नमः । भगलिङ्गायै नमः । भगद्रवायै नमः । सकलायै नमः । निष्कलायै नमः । काल्यै नमः । कराळ्यै नमः । कलभाषिण्यै नमः । २२०

कमलायै नमः । हंसिन्यै नमः । कालायै नमः । करुणायै नमः । करुणावत्यै नमः । भास्वरायै नमः । भैरव्यै नमः । भासायै नमः । भद्रकाल्यै नमः । कुलांगनायै नमः । रसात्मिकायै नमः । रसावासायै

1. भगकृतायै

नमः । रसस्यन्दायै नमः । रसावहायै नमः । कामनिष्यंदिन्यै नमः । काम्यायै नमः । कामिन्यै नमः । कामदायिन्यै नमः । विद्यायै नमः । विधात्र्यै नमः । २४०

विविधायै नमः । विश्वधात्र्यै नमः[1] । विधाविधायै नमः । सर्वाङ्गसुन्दर्यै[2] नमः । सौम्यायै नमः । लावण्यसरिदम्बुधये नमः । चतुरांग्यै नमः । चतुर्बाह्वे नमः । चतुरायै नमः । चारुहंसि[3]न्यै नमः । मंत्रायै नमः । मन्त्रमय्यै नमः । मात्रे नमः । मणिपूरसमाश्रयायै नमः । मन्त्रात्मिकायै नमः । मन्त्रमात्रे नमः । मन्त्रगम्यायै नमः । सुमंत्रितायै[4] नमः । पुष्पबाणायै नमः । पुष्पजेत्र्यै नमः । २६०

पुष्पिण्यै नमः । पुष्पवर्धिन्यै नमः । वज्रेश्वर्यै नमः । वज्रहस्तायै नमः । पुराण्यै नमः । पुरवासिन्यै नमः। तारायै नमः । सुतरुण्यै[5] नमः । तारायै नमः । तरुण्यै[6] नमः । तार‍रूपिण्यै नमः । इक्षुचापायै नमः । महापाशायै नमः । शुभदायै नमः । प्रियवादिन्यै नमः । सर्वदायै[7] नमः। सर्वजनन्यै नमः । सर्वार्थायै नमः । सर्वपावन्यै नमः । आत्मविद्यायै नमः । २८०

महाविद्यायै नमः । ब्रह्मविद्यायै नमः । विवस्वत्यै नमः । शिवायै नमः । ईश्वर्यै नमः। शिवाराध्यायै नमः । शिवनाथायै नमः । शिवात्मिकायै नमः । आत्मिकायै नमः । ज्ञाननिलयायै नमः । निर्भेदायै नमः । निर्वृतिप्रदायै नमः । निर्वाणरूपिण्यै नमः । नित्यायै[8] नमः। नियमायै नमः । निष्कलायै नमः । प्रभायै नमः । श्रीफलायै नमः । श्रीप्रदायै नमः । शिष्यायै नमः । ३००

---

*1.* विश्वदायै, त्रिविधायै, विधायै *2.* सर्वाङ्गायै, सुन्दर्यै *3.* चारुहासिन्यै *4.* सुमन्त्रकायै *5.* सुतरुणाकारायै, *6.* रूपिण्यै *7.* सर्वगायै *8.* पूर्णायै

श्रीमय्यै नमः । शिवरूपिण्यै नमः । क्रूरायै नमः । कुण्डलिन्यै नमः । कुब्जायै नमः । कुटिलायै नमः । कुटिलालकायै नमः । महोदयायै नमः । महारूपायै नमः । महामायायै[1] नमः । कलामय्यै नमः । वशिन्यै नमः । सर्वजनन्यै नमः । चित्रवासायै नमः । विचित्रकायै नमः । सूर्यमण्डलमध्यस्थायै नमः । स्थिरायै नमः । शंकरवल्लभायै नमः । सुरभ्यै नमः । सुमनस्सूर्यायै नमः[2] । ३२०

सुषुम्नायै नमः । सोमभूषणायै नमः । सुधाप्रदायै नमः । सुधाधारायै नमः । सुश्रियै नमः । सम्पत्तिरूपिण्यै नमः । अमृतायै नमः । सत्यसंकल्पायै नमः । सत्यायै नमः । षड्ग्रन्थिभेदिन्यै नमः । इच्छाशक्त्यै नमः । महाशक्त्यै नमः । क्रियाशक्त्यै नमः । प्रियंकर्यै नमः । लीलायै नमः । लीलालयायै नमः । आनन्दायै नमः । सूक्ष्मबोधस्वरूपिण्यै[3] नमः । सकलायै नमः । रसनायै नमः । ३४०

सारायै नमः । सारगम्यायै नमः । सरस्वत्यै नमः । परायै नमः । परायण्यै नमः । पद्मायै नमः । परनिष्ठायै नमः । परापरायै नमः । श्रीमत्यै नमः । श्रीकर्यै नमः । व्योम्न्यै नमः । शिवयोन्यै नमः । शिवेक्षणायै नमः । निरानन्दायै नमः । निराख्येयायै नमः । निर्द्वन्द्वायै नमः । निर्गुणात्मिकायै नमः । बृहत्यै नमः । ब्राह्मण्यै नमः । ब्राह्म्यै नमः । ३६०

ब्रह्माणी ब्रह्मरूपिण्यै[4] नमः । धृत्यै नमः । स्मृत्यै नमः । श्रुत्यै नमः । मेधायै नमः । श्रद्धायै नमः । पुष्टचै नमः । स्तुत्यै नमः । मत्यै नमः । अद्वयायै नमः । आनन्दसम्बोधायै नमः । वरायै नमः । सौभाग्यरूपिण्यै नमः । निरामयायै नमः । निराकारायै नमः ।

---

*1.* मह्यै, माह्यै, *2.* सुमनसे, सूर्यायै, सुमहसे, सूर्यायै,

*3.* सूक्ष्मायै, बोधस्वरूपिण्यै *4.* ब्रह्माण्यै, ब्रह्मरूपिण्यै

जृम्भिण्यै नमः । स्तम्भिन्यै नमः । रत्यै नमः । बोधिकायै नमः । कमलायै नमः । ३८०

रौद्र्यै नमः । द्राविण्यै नमः । क्षोभिण्यै नमः । मत्यै नमः । कुचेल्यै नमः । कुचमध्यस्थायै नमः । मध्यकूटगत्यै[1] नमः । प्रियायै नमः । कुलोत्तीर्णायै नमः । कुलवत्यै नमः । बोधायै नमः । वाग्वादिन्यै नमः । सत्यै नमः । उमायै नमः । प्रियव्रतायै नमः । लक्ष्म्यै नमः । वकुलायै नमः । कुलरूपिण्यै नमः । विश्वात्मिकायै नमः । विश्वयोन्यै नमः । ४००

विश्वासक्तायै नमः । विनायकायै नमः । ध्यायिन्यै नमः । नादिन्यै नमः । तीर्थायै नमः । शांकर्यै नमः । मन्त्रसाक्षिण्यै नमः । सन्मन्त्ररूपिण्यै नमः । हृष्टायै नमः । शांकर्यै नमः । सुरशांकर्यै नमः । सुन्दराङ्ग्यै नमः । सुरावासायै नमः । सुरवंद्यायै नमः । सुरेश्वर्यै नमः । सुवर्णवर्णायै[2] नमः । सत्कीर्त्यै नमः । सुवर्णायै[2] नमः । वर्णरूपिण्यै नमः । ललितांग्यै नमः । ४२०

वरिष्ठायै नमः । श्रियै नमः । अस्पन्दायै नमः । स्पन्दरूपिण्यै नमः। शांभव्यै नमः । सच्चिदानन्दायै नमः । सच्चिदानन्दरूपिण्यै नमः । जयिन्यै नमः । विश्वजनन्यै नमः । विश्वनिष्ठायै नमः । विलासिन्यै नमः । भ्रूमध्यायै नमः । अखिलनिष्पाद्यायै नमः । निर्गुणायै नमः । गुणवर्धिन्यै नमः । हृल्लेखायै नमः । भुवनेशान्यै नमः । भुवनायै[4] नमः । भुवनात्मिकायै[5] नमः । विभूत्यै नमः । ४४०

भूतिदायै नमः । भूत्यै नमः । सम्भूत्यै नमः । भूतिकारिण्यै नमः । ईशान्यै नमः । शाश्वत्यै नमः । शैव्यै नमः । शर्वाण्यै नमः । शर्मदायिन्यै नमः। भवान्यै नमः । भावगायै नमः । भावायै नमः ।

---

1. मध्यकूटायै, गतिप्रियायै 2. सुवर्णायै, वर्णसंकीर्त्यै 3. सवर्णायै
4. भवनायै 5. भवनात्मिकायै

भावनायै नमः । भावनात्मिकायै नमः । हृत्पद्मनिलयायै नमः । शूरायै नमः । स्वरावृत्त्यै नमः । स्वरात्मिकायै नमः । सूक्ष्मरूपायै नमः । परानन्दायै[1] नमः । ४६०

स्वात्मस्थायै नमः । विश्वदायै नमः । शिवायै नमः । परिपूर्णायै नमः । दयापूर्णायै[2] नमः । मदघूर्णितलोचनायै नमः । शरण्यायै नमः । तरुणार्काभायै नमः । मधुरक्तायै[3] नमः । मनस्विन्यै नमः । अनन्तायै नमः । अनन्तमहिमायै नमः । नित्यतृप्तायै नमः । निरञ्जनायै नमः । अचिन्त्यायै नमः । शक्तिचिन्त्यार्थायै[4] नमः । चिन्त्यायै नमः । चिन्त्यस्वरूपिण्यै नमः । जगन्मय्यै नमः । जगन्मात्रे नमः । ४८०

जगत्सारायै नमः । जगद्भवायै नमः । आप्यायिन्यै नमः । परानन्दायै नमः । कूटस्थायै नमः । आवासरूपिण्यै नमः । ज्ञानगम्यायै नमः । ज्ञानमूर्त्यै नमः । ज्ञापिन्यै नमः । ज्ञानरूपिण्यै नमः । खेचर्यै नमः । खेचरीमुद्रायै नमः। खेचरीयोगरूपिण्यै नमः । अनाथनाथायै नमः । निर्नाथायै नमः । घोरायै नमः । अघोरस्वरूपिण्यै नमः । सुधाप्रदायै नमः । सुधाधारायै नमः । सुधारूपायै नमः । ५००

सुधामय्यै नमः । दहरायै नमः । दहराकाशायै नमः । दहराकाशमध्यगायै नमः । माङ्गल्यायै नमः । मङ्गलकर्यै नमः । महामाङ्गल्यदेवतायै नमः । माङ्गल्यदायिन्यै नमः । मान्यायै नमः । सर्वमङ्गलदायिन्यै नमः । स्वप्रकाशायै नमः । महाभासायै[5] नमः । भामिन्यै नमः । भवरूपिण्यै नमः । कात्यायन्यै नमः । कलावासायै नमः । पूर्णका[6]मायै नमः । यशस्विन्यै नमः । अर्थावसा[7]ननिलयायै

1. परायै, आनन्दायै 2. दयायै पूर्णायै 3. मदारक्तायै
4. शक्त्यै, चिन्त्यार्थायै 5. महाभूषायै, 6. पूर्णायै, कामायै,
7. अर्धायै अवसाननिलयाय

नमः। नारायणमनोहरायै नमः। ५२०

मोक्षमार्गविधानज्ञायै नमः। विरिंचोत्पत्तिभूमिकायै नमः। अनुत्तरायै नमः। महाराध्यायै नमः। दुष्प्रापायै नमः। दुरतिक्रमायै नमः। शुद्धिदायै नमः। कामदायै[1] नमः। सौम्यायै नमः। ज्ञानदायै नमः। मानदायिन्यै नमः। स्वधायै नमः। स्वाहायै नमः। सुधायै नमः। मेधायै नमः। मधुरायै नमः। मधुमन्दिरायै नमः। निर्वाणदायिन्यै नमः। श्रेष्ठायै नमः। शर्मिष्ठायै नमः। ५४०

शारदार्चितायै नमः। सुवर्चलायै नमः। सुराराध्यायै नमः। शुद्धसत्वायै नमः। सुरार्चितायै नमः। स्तुत्यै नमः। स्तुतिमय्यै नमः। स्तुत्यायै नमः। स्तुतिरूपायै नमः। स्तुतिप्रियायै नमः। कामेश्वर्यै नमः। कामवत्यै नमः। कामिन्यै नमः। कामरूपिण्यै नमः। आकाशगर्भायै नमः। ह्रींकार्यै नमः। कङ्काळ्यै नमः। कालरूपिण्यै नमः। विष्णुपत्न्यै नमः। विशुद्धार्थायै नमः। ५६०

विश्वरूपायै नमः। ईशवन्दितायै नमः। विश्ववेद्यायै नमः। महावीरायै नमः। विश्वघ्न्यै नमः। विश्वरूपिण्यै नमः। कुश[2]लायै नमः। आढ्यायै नमः। [3]शीलवत्यै नमः। शैलस्थायै नमः। शैलरूपिण्यै नमः। रुद्राण्यै नमः। चण्ड्यै[4] नमः। खड्वाङ्ग्यै नमः। डाकिन्यै नमः। साकिन्यै नमः। प्रभायै नमः। नित्यायै नमः। निर्वेदखट्वाङ्ग्यै नमः। जनन्यै नमः। ५८०

जनरूपिण्यै नमः। तलोदर्यै नमः। जगत्सूत्र्यै नमः। जगत्यै नमः। ज्वलिन्यै नमः। ज्वल्यै नमः। साकिन्यै नमः। सारसंहृद्यायै नमः। सर्वोत्तीर्णायै नमः। सदाशिवायै नमः। स्फुरन्त्यै नमः। स्फुरिताकारायै नमः। स्फूर्त्यै नमः। स्फुरणरूपिण्यै नमः। शिवदूत्यै

*1.* कामगायै *2.* सुशीलाढ्यायै *3.* शैलवत्यै *4.* चण्डखट्वांग्यै

नमः । शिवायै नमः । शिष्टायै नमः । शिवज्ञायै नमः । शिवरूपिण्यै नमः । रागिण्यै नमः । ६००

रञ्जन्यै नमः । रम्यायै नमः । रजन्यै नमः । रजनीकरायै नमः । विश्वम्भरायै नमः । विनीतायै नमः । इष्टायै नमः । विधान्यै नमः । विधिवल्लभायै नमः । विद्योतिन्यै नमः । विचित्रार्थायै नमः । विश्वाद्यायै नमः । विविधाभिधायै नमः । विश्वाक्षरायै नमः । सरसिकायै नमः । विश्वस्थायै नमः । अतिविचक्षणायै नमः । ब्रह्मयोन्यै नमः । महायोन्यै नमः । कर्मयोन्यै नमः ६२०

त्रयीतनवे नमः । हाकिन्यै नमः । हारिण्यै नमः । सौम्यायै नमः । रोहिण्यै नमः । रोगनाशिन्यै नमः । श्रीप्रदायै नमः । श्रियै नमः । श्रीधरायै नमः । श्रीकरायै नमः । श्रीमत्यै नमः । प्रियायै नमः । श्रीमत्यै नमः । श्रीकर्यै नमः । श्रेयसे नमः । श्रेयस्यै नमः । सुरेश्वर्यै नमः । कामेश्वर्यै नमः । कामवत्यै नमः । कामगिर्यालयस्थितायै नमः । ६४०

रुद्रात्मिकायै नमः । रुद्रमात्रे नमः । रुद्रगम्यायै नमः । रजस्वलायै नमः । अकारषोडशान्तस्थायै नमः । भैरव्यै नमः । ह्लादिन्यै नमः । परायै नमः । कृपादेहायै नमः । अरुणायै नमः । नाथायै नमः । सुधाबिन्दुसमाश्रितायै नमः । काळ्यै नमः । कामकलायै नमः । कन्यायै नमः । पार्वत्यै नमः । पररूपिण्यै नमः । मायावत्यै नमः । घोरमुख्यै नमः । नादिन्यै[1] नमः । ६६०

दीपिन्यै नमः । शिवायै[2] नमः । मकारामृतचक्रेश्यै [3]नमः । महासेनाविमोहिन्यै[4] नमः । उत्सुकायै नमः । हृष्टायै नमः । अनुत्सुकायै नमः। ह्रींकार्यै नमः । चक्रनायिकायै नमः । रुद्रायै नमः । भवान्यै नमः । चामुण्ड्यै नमः । ह्रींकार्यै नमः । सौख्यदायिन्यै नमः ।

*1.* वादिन्यै *2.* शुभायै, मातृचक्रेश्यै *3.* वादिन्यै *4.* महासेनायै विमोहिन्यै

गरुडायै नमः । गरुड्यै नमः । [1]कृष्णायै नमः । सकलायै नमः । ब्रह्मचारिण्यै नमः । कृष्णाङ्गायै नमः । ६८०

वाहिन्यै नमः । कृष्णायै नमः । खेचर्यै नमः । कमलाप्रियायै नमः । भद्रिण्यै नमः । रुद्रचामुण्डायै नमः । ह्रींकार्यै नमः । सौभगायै नमः । ध्रुवायै नमः । गोरु[2]ड्यै नमः । गारुड्यै नमः । ज्येष्ठायै नमः । स्वर्ग[3]गायै नमः । ब्रह्मचारिण्यै[4] नमः । पानानुरक्तायै नमः । पानस्थायै नमः । भीमरूपायै नमः । भयापहायै नमः । रक्तायै नमः । चण्डायै नमः । ७००

सुरानन्दायै नमः । त्रिकोणायै नमः । पानदर्पितायै नमः । महोत्सुकायै नमः । क्रतुप्रीतायै नमः । कङ्काळ्यै नमः । कालदर्पितायै नमः । सर्ववर्णायै नमः । सुवर्णाभायै नमः । परामृतमहार्णवायै नमः । योग्या[5]र्णवायै नमः । नागबुद्ध्यै नमः । वीरपानायै नमः । नवात्मिकायै नमः । द्वादशान्तसरोजस्थायै नमः । निर्वाणसुखदायिन्यै नमः । आदिसत्वायै नमः । ध्यानसत्वायै नमः । श्रीकण्ठस्वान्तमोहिन्यै नमः । परायै नमः । ७२०

घोरायै नमः । करालाक्ष्यै नमः । स्वमूर्त्यै नमः । मेरुनायिकायै नमः। आकाशलिङ्गसम्भूतायै नमः । परामृतरसात्मिकायै नमः । शाङ्कर्यै नमः । शाश्वत्यै नमः । रुद्रायै नमः । [6]कपालकुलदीपिकायै नमः । विद्यातनवे नमः। मन्त्रतनवे नमः । चण्डायै नमः । मुण्डायै नमः । सुदर्पितायै नमः । वागीश्वर्यै नमः । योगमुद्रायै नमः । त्रिखण्डायै नमः । सिद्धमण्डितायै नमः । शृङ्गारपीठनिलयायै नमः । ७४०

---

*1.* ज्येष्ठायै, *2.* गरुड्यै *3.* स्वर्गदायै *4.* ब्रह्मवादिन्यै *5.* योगार्णवायै *6.* कपालायै कुलदीपिकायै

काल्यै नमः । मातङ्गकन्यकायै नमः । संवर्तमण्डलान्तस्थायै नमः । भुवनोद्यानवासिन्यै[1] नमः । पादुकाक्रमसंतृप्तायै नमः । भैरवस्थायै नमः । अपराजितायै नमः । [2]निर्वाणसौरभायै नमः । दुर्गायै नमः । महिषासुरमर्दिन्यै नमः । भ्रमराम्बायै नमः । शिखरिकायै नमः । ब्रह्मविष्ण्वीशतर्पितायै नमः । उन्मत्तहेला-रसिकायै नमः । योगिन्यै नमः । योगदर्पितायै नमः । सन्तानानन्दिन्यै नमः । बीजचक्रायै नमः । परमकारुण्यै नमः । ७६०

खेचर्यै[3] नमः । नायिकायै नमः । योग्यायै नमः । परिवृत्तायै नमः । अतिमोहिन्यै नमः । शाकम्भर्यै नमः । सम्भवित्र्यै नमः । स्कन्दानन्द्यै[4] नमः । मदार्पितायै नमः । क्षेमंकर्यै नमः । सुमाश्वासायै नमः । स्वर्गदायै नमः। बिन्दुकारिण्यै नमः । चर्चितायै नमः । चर्चितपदायै नमः । चारुखट्वाङ्गधारिण्यै नमः । अघोरायै नमः । मन्त्रितपदायै नमः । भामिन्यै नमः । भवरूपिण्यै नमः । ७८०

उषायै नमः । सङ्कर्षिण्यै नमः । धात्र्यै नमः । उमायै नमः । कात्यायन्यै नमः । शिवायै नमः । सुलभायै नमः । दुर्लभायै नमः । शास्त्र्यै नमः । महाशास्त्र्यै नमः । शिखण्डिन्यै नमः । योगलक्ष्म्यै नमः । भोगलक्ष्म्यै नमः । राज्यलक्ष्म्यै नमः । कपालिन्यै नमः । देवयोन्यै नमः । भगवत्यै नमः । धन्विन्यै नमः । नादिन्यै नमः । ईश्वर्यै नमः । ८००

[5]मन्त्रात्मिकायै नमः । महाधात्र्यै नमः । बलिन्यै नमः । केतुरूपि[6]ण्यै नमः । सदानन्दायै नमः । सदाभद्रायै नमः । फल्गुन्यै नमः । रक्तवर्षिण्यै नमः । मन्दारमन्दिरायै नमः । तीव्रायै नमः ।

1. भुवनायै, उद्यानवासिन्यै 2. निर्याणायै, सौरभायै, 3. खेचरीनायिकायै 4. स्कन्दायै आनन्द्यै 5. क्षेत्रात्मिकायै 4. केतुमालिन्यै

ग्राहिकायै[1] नमः । सर्वभक्षिण्यै नमः । अग्निजिह्वायै नमः । महाजिह्वायै नमः । शूलिन्यै नमः । शुद्धिदायै नमः । परायै नमः । सुवर्णिकायै नमः । कालदूत्यै नमः । देव्यै नमः । ८२०

कालस्वरूपिण्यै नमः । शङ्खिन्यै[2] नमः । नयन्यै[3] नमः । गुर्व्यै नमः । वाराह्यै नमः । हुंफडात्मिकायै नमः । उग्रात्मिकायै नमः । पद्मवत्यै नमः । धूर्जट्यै नमः। चक्रधारिण्यै नमः । देव्यै नमः । तत्पुरुषायै नमः । शिक्षायै । नमः । साध्व्यै [4]नमः । स्त्रीरूपधारिण्यै नमः । दक्षायै नमः। दाक्षायण्यै नमः । दीक्षायै नमः । मदनायै नमः । मदनातुरायै नमः । ८४०

धिष्ण्यायै नमः । हिरण्यायै नमः । सरण्यै नमः । धरित्र्यै नमः । धररूपिण्यै नमः । वसुधायै नमः । वसुधाच्छायायै नमः । वसुधामायै नमः । सुधामय्यै नमः । शृङ्गिण्यै नमः । भीषणायै नमः । सान्ध्यै नमः । प्रेतस्थानायै नमः । मतङ्गिन्यै नमः । खण्डिन्यै नमः । योगिन्यै नमः । तुष्ट्यै नमः । नादिन्यै नमः । भेदिन्यै नमः । नट्यै नमः । ८६०

खट्वाङ्गिन्यै नमः । काळरात्र्यै नमः । मेघमालायै नमः । धरात्मिकायै नमः । भापीठस्थायै नमः । भवद्रूपायै नमः । महाश्रियै नमः । धूम्रलोचनायै नमः । सुखदायै नमः । गन्धिन्यै नमः । बन्धवे नमः । बन्धिन्यै नमः । बन्धमोचिन्यै नमः । सावित्र्यै नमः । सत्कृत्यै नमः । कर्त्र्यै नमः । [5]उमायै नमः । मायायै नमः । महोदयायै नमः । गन्धर्व्यै[6] नमः । ८८०

सुगुणाकारायै[7] नमः । सद्गुणायै नमः । गु[8]णपूजितायै नमः । निर्मलायै नमः । गिरिजायै नमः । शब्दायै नमः । शर्वाण्यै नमः ।

---

*1.* ग्राहिण्यै *2.* कुंभिन्यै *3.* शयन्यै *4.* माध्व्यै , *5.* क्षमायै *6.* गणेश्वर्यै, *7.* गणाकारायै, *८.* गणपूजितायै

शर्मदायिन्यै नमः । एकाकिन्यै नमः । सिन्धुकन्यायै नमः । काव्यसूत्रस्वरूपिण्यै नमः । अव्यक्तरूपिण्यै नमः । व्यक्तायै नमः । योगिन्यै नमः । पीठरूपिण्यै नमः । निर्मदायै नमः । धामदायै नमः । आदित्यायै नमः । नित्यायै नमः । सेव्यायै नमः । ९००

अक्षरात्मिकायै नमः । तपिन्यै नमः । तापिन्यै नमः । दीक्षायै नमः । शोधिन्यै नमः । शिवदायिन्यै नमः । स्वस्त्यै (स्वस्ति) नमः । स्वस्तिमत्यै नमः । बालायै नमः । कपिलायै नमः । विस्फुलिङ्गिन्यै नमः । अर्चिष्मत्यै नमः । द्युतिमत्यै नमः । कौलिन्यै नमः । कव्यवाहिन्यै नमः । जनाश्रितायै नमः । विष्णु विद्यायै नमः । मानस्यै नमः । विन्ध्यवासिन्यै नमः । विद्याधर्यै नमः । ९२०

लोकधात्र्यै नमः । सर्वस्यै नमः । सारस्वरूपिण्यै नमः । पापघ्न्यै नमः। सर्वतोभद्रायै नमः । त्रिस्थायै नमः । शक्तित्रयात्मिकायै नमः । त्रिकोणनिलयायै नमः । त्रिस्थायै नमः । त्रयीमात्रे नमः । त्रयीपतये[1] नमः । त्रयीविद्यायै नमः । त्रयीसारायै नमः । त्रयीरूपायै नमः । त्रिपुष्करायै नमः । त्रिवर्णायै नमः । त्रिपुरायै नमः । त्रिश्रियै नमः । त्रिमूर्तये नमः । त्रिदशेश्वर्यै नमः । ९४०

त्रिकोणसंस्थायै नमः । त्रिविधायै नमः । त्रिस्वरायै नमः । त्रिपुरांबिकायै नमः । [2]त्रिविधायै नमः । त्रिदिवेशान्यै नमः । त्रिस्थायै नमः। त्रिपुरदाहिन्यै नमः । जङ्घिन्यै नमः । स्फोटिन्यै नमः । स्फूर्त्यै नमः । स्तम्भिन्यै नमः । शोषिण्यै नमः । प्लुतायै नमः । ऐंकाराख्यायै नमः । वामदेव्यै नमः । खण्डिन्यै नमः । चण्डदण्डिन्यै नमः । क्लींकार्यै नमः । वत्सलायै नमः । ९६०

1. त्रयीतनवे, 2. त्रिदिवायै

हृष्टायै नमः । सौःकार्यै नमः । मदहंसिकायै नमः । वज्रिण्यै नमः । द्राविण्यै नमः । जैत्र्यै नमः । श्रीमत्यै नमः । गोमत्यै नमः । ध्रुवायै नमः । परतेजोमय्यै नमः । संविदे नमः । पूर्णपीठनिवासिन्यै नमः । त्रिधात्मने नमः। त्रिदशाध्यक्षायै नमः । त्रिघ्न्यै नमः । त्रिपुरमालिन्यै नमः । त्रिपुराश्रियै नमः । त्रिजनन्यै नमः । त्रिभुवे नमः । त्रैलोक्यसुन्दर्यै नमः। ९८०

कुमार्यै नमः । कुण्डल्यै नमः । धात्र्यै नमः । बालायै नमः । भक्तेष्टदायिन्यै नमः । कलावत्यै नमः । भगवत्यै नमः । भक्तिदायै नमः । भवनाशिन्यै नमः । सौगन्धिन्यै नमः । सरिद्वेण्यै नमः । पद्मरागकिरीटिन्यै नमः। तत्वत्रय्यै नमः । तत्वमय्यै नमः । मन्त्रिण्यै नमः । मन्त्ररूपिण्यै नमः। सिद्धायै नमः । श्रीत्रिपुरावासायै नमः । बालायै नमः । त्रिपुरसुन्दर्यै नमः । १०००

बालासहस्रनामावलिः

समाप्ता

# बालासहस्रनामस्तोत्रम् - २

समाध्युपरतं काले कदाचिद्धिजने मुदा।
परमानन्दसन्दोहमुदितं प्राह पार्वती॥ १॥

श्रीदेवी—

श्रीमन्नाथ तवानन्दकारणं ब्रूहि शङ्कर।
योगीन्द्रोपास्य देवेश प्रेमपूर्ण सुधानिधे।
कृपास्ति यदि मे शम्भो सुगोप्यमपि कथ्यताम्॥ २॥

श्रीभैरवः

निर्भरानन्दसन्दोहः शक्तिभावेन जायते।
लावण्यसिन्धुस्तत्रास्ति बालाया रसकन्दरः॥ ३॥

तामेवानुक्षगणं देवीं चिन्तयामि ततः शिवाम्।
तस्या नामसहस्राणि कथयामि तव प्रिये॥ ४॥

सुगोप्यान्यपि रम्भोरु गम्भीरस्नेहविभ्रमात्।
तामेव स्तुवतो देवि ध्यायतोऽनुक्षणं मम।
सुखसन्दोहसंभावो ज्ञानानन्दस्य कारणम्॥ ५॥

अस्य श्रीबालात्रिपुरसुन्दरी सहस्रनामस्तोत्रस्य शङ्कर ऋषिः, अनुष्टुप् छन्दः, श्रीबालात्रिपुरा देवता, ऐं बीजम्। सौः शक्तिः। क्लीं कीलकम्। श्रीबालाप्रीत्यर्थे समस्तपुरुषार्थसिद्ध्यर्थे पारायण विनियोगः। ऐं अङ्गुष्ठाभ्यां नमः। क्लीं तर्जनीभ्यां नमः। सौः मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। क्लीं कनिष्ठिकाभ्यां नमः। सौः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। ध्यानम्।

अरुणकिरणजालै रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता।
इतरवरकराढ्या फुल्लकल्हार संस्था
निवसतु हृदि बाला नित्यकल्याणशीला॥

रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम्।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम्॥

आनन्दसिन्धुरानन्दाऽऽनन्दमूर्तिर्विनोदिनी।
त्रिपुरा सुन्दरी प्रेमपाथोनिधिरनुत्तमा॥ १॥

वामार्धगह्वरा भूतिर्विभूतिः शङ्करी शिवा।
शृङ्गारमूर्तिर्वरदा रसा च शुभगोचरा ॥ २॥

परमानन्दलहरी रती रङ्गवती गतिः।
रङ्गमालानङ्गकला केली कैवल्यदा कला॥ ३॥

रसकल्पा कल्पलता कुतूहलवती गतिः।
विनोददिग्धा सुस्निग्धा मुग्धमूर्तिर्मनोरमा॥ ४॥

बालार्ककोटि किरणा चन्द्रकोटि सुशीतला।
स्रवत्पीयूषदिग्धाङ्गी स्वगार्थि परिकल्पिता॥ ५॥

कुरङ्गनयना कान्ता सुगतिः सुखसन्ततिः[1]।
राजराजेश्वरी राज्ञी महेन्द्रपरिवन्दिता॥ ६॥

प्रपञ्चगतिरीशानी प्रपञ्चगतिरुत्तमा।
दुर्वासा दुःसहा शक्तिः शिञ्जत्कनकनूपुरा॥ ७॥

मेरुमन्दरवक्षोजा सृणिपाशवरायुधा।
शरकोदण्ड संसक्तपाणिद्वयविराजिता॥ ८॥

---

1. इन्दिरा मधुरापाङ्गा मङ्गला गतिरत्नदा इत्यधिकम्।

चन्द्रबिम्बानना चारुमुकुटोत्तंसचन्द्रिका।
सिन्दूरतिलका चारुधम्मिल्लामलमालिका॥ ९॥

मन्दारदाममुदिता रत्नमालाविभूषिता।
सुवर्णाभरणप्रीता मुक्तादाममनोरमा॥ १०॥

ताम्बूलपूर्णवदना मदनानन्दमानसा।
सुखाराध्या तपःसारा कृपापारा विधीश्वरी॥ ११॥

वक्षःस्थलल‌सद्रत्नप्रभा मधुरसोन्मदा।
बिन्दुनादात्मकोच्चाररहिता तुर्यरूपिणी॥ १२॥

कमनीयाकृतिर्धन्या शाङ्करी प्रीतिमञ्जरी।
प्रपञ्चा पञ्चमी पूर्णा पूर्णपीठ निवासिनी॥ १३॥

राज्यलक्ष्मीश्च श्रीलक्ष्मीर्महालक्ष्मीः सुराजिका।
सन्तोषसीमा संपत्तिः शातकौम्भी[1] तथा द्युतिः॥ १४॥

परिपूर्णा जगद्धात्री विधात्री बलवर्धिनी।
सार्वभौमनृपश्रीश्च साम्राज्यगतिरम्बिका॥ १५॥

सरोजाक्षी दीर्घदृष्टिः साचीक्षणविचक्षणा।
रङ्गस्रवन्ती रसिका(१००) प्रधाना रसरूपिणी॥ १६॥

रससिन्धुः सुगात्री च धूसरी मैथुनोन्मुखा।
निरन्तरगुणासक्ता शक्तिर्निधुवनात्मिका॥ १७॥

कामाक्षी कमनीया च कामेशी भगमङ्गला।
सुभगा भोगिनी भोग्या भाग्यदा सुभगा भगा॥ २८॥

भगलिङ्गानन्दकला भगमध्यनिवासिनी।
भगरूपा भगमयी भगयन्त्रा भगोत्तमा॥ १९॥

1. शातकुंभप्रिया कृतिः।

योनिमुद्रा कामकला कुलामृतपरायणा।
कुलकुण्ड ालया सूक्ष्मा जीवात्मा लिङ्गरूपिणी।। २०।।

मूलक्रिया मूलरूपा मूलाकृतिस्वरूपिणी।
सोत्सुका कमलानन्दा चिद्भावाऽऽत्मगतिः शिवा।। २१।।

श्वेतारुणा बिन्दुरूपा वेदयोनिर्ध्वनिक्षणा।
घण्ट ाकोटि रवारावा रविबिम्बोत्थिताऽद्भुता।। २२।।

नादान्तलीना संपूर्णा पूर्णस्था बहुरूपिका।
भृङ्गारावा वंशगतिर्वादित्रा मुरजध्वनिः।। २३।।

वर्णमाला सिद्धिकला षट् चक्रक्रमवासिनी।
मूलकेलीरता स्वाधिष्ठ ाना तुर्यनिवासिनी।। २४।।

मणिपूरस्थितिः स्निग्धा कूर्मचक्रपरायणा।
अनाहतगतिर्दीपशिखा मणिमयाकृतिः।। २५।।

बिशुद्धा शब्दसंशुद्धा जीवबोधस्थली रवा।
आज्ञाचक्राब्जसंस्था च स्फुरन्ती निपुणा त्रिवृत्।। २६।।

चन्द्रिका चन्द्रकोटि श्रीः सूर्यकोटि प्रभामयी।
पद्मरागारुणच्छ ाया नित्याऽऽह्लादमयी प्रभा।। २७।।

पानश्रीश्च प्रियामात्या निश्चलाऽमृतनन्दिनी।
कान्ताङ्गसङ्गमुदिता सुधामाधुर्यसंभृता।। २८।।

महामश्चस्थिताऽलिप्ता तृप्ता दृप्ता सुसंभृतिः।
स्रवत्पीयूषसंसिक्ता रक्तार्णवविवर्धिनी।। २९।।

सुरक्ता प्रियसंसिक्ता शश्वत्कुण्ड ालयाऽभया। (२००)।
श्रेयः श्रुतिश्च प्रत्येकानवकेशिफलावली।। ३०।।

प्रीता शिवा शिवप्रिया शाङ्करी शाम्भवी विभा।
स्वयंभूः स्वप्रिया स्वीया स्वकीया जनमातृका।। ३१ ।।

स्वारामा स्वाश्रया साध्वी सुधाधाराऽधिकाधिका।
मङ्गलोज्जयिनी मान्या सर्वमङ्गलसङ्गिनी।। ३२ ।।

भद्रा भद्रावली कन्या कलितार्धेन्दुबिम्बभाक्।
कल्याणलतिका काम्या कुकर्मा कुमतिर्मनुः ।। ३३ ।।

कुरङ्गाक्षी क्षीबनेत्रा क्षारा रसमदोन्मदा।
वारुणीपानमुदिता मदिरारचिताश्रया।। ३४ ।।

कादम्बरीपानरुचिर्विपाशा पाशभीतिनुत्।
मुदिता मुदितापाङ्गा दरदोलितदीर्घदृक्।। ३५ ।।

दैत्यकुलानलशिखा मनोरथसुधाद्युतिः।
सुवासिनी पीनगात्री पीनश्रोणिपयोधरा।।

सुचारुकबरी दन्तदीधितिदीप्रमौक्तिका।
बिम्बाधरा द्युतिमुखा प्रवालोत्तमदीधितिः।। ३७।।

तिलप्रसूननासाग्रा हेमकक्कोलभालका।
निष्कलङ्केन्दुवदना बालेन्दुमुकुटोज्ज्वला।। ३८ ।।

नृत्यत्खञ्जननेत्रश्रीर्विस्फुरत्कर्णशष्कुली।
बालचन्द्रातपत्रार्धा मणिसूर्यकिरीटिनी[1] ।। ३९ ।।

हेममाणिक्यताटङ्का मणिकाञ्चनकुण्डला।
सुचारुचिबुका कम्बुकण्ठी मणिमनोरमा।। ४० ।।

---

1. केशौघचम्पकासेना मालतीदामपण्डिता इत्यधिकम्।

गङ्गातरङ्गहारोर्मिर्मत्तकोकिलनिः स्वना।
मृणालविलसद्बाहुः पाशाङ्कुशधनुर्धरा॥ ४१॥

केयूरकटकाच्छन्ना नानारत्नमनोरमा।
ताम्रपङ्कजपाणिश्रीर्नखरत्नप्रभावती॥ ४२॥

अङ्गुलीयमणिश्रेणिचञ्चदङ्गुलिसन्ततिः।
मन्दरद्वन्द्वसुकुचा रोमराजीभुजङ्गका॥ ४३॥

गम्भीरनाभिस्त्रिवलीवलया च सुमध्यमा।
रणत्काञ्चीगुणोन्नद्धा पट्टांशुकसुनीविका॥ ४४॥

मेरुगुण्डीनितम्बाढ्या गजगण्डोरुयुग्मयुक्।
सुजानुमन्दरासक्तलसज्जङ्घाद्वयान्विता॥ ४५॥

गूढगुल्फा मञ्जुशिञ्जन्मणिनूपुरमण्डिता।[1]
योगिध्येयपदद्वन्द्वा सुधामाऽमृतसारिणी॥ ४६॥

लावण्यसिन्धुः सिन्दूरतिलका कुटिलालका।
साधुसिद्धा सुबुद्धा च बुधा वृन्दारकोदया॥ ४७॥

बालार्ककिरणश्रेणीशोणा श्रीप्रेमकामधुक्।
रसगम्भीरसरसी पद्मिनी (३००) रससारसा॥ ४८॥

प्रसन्नाऽऽसन्नवरदा शारदा च सुभाग्यदा।
नटराजप्रिया विश्वनाट्या नर्तकनर्तकी॥ ४९॥

विचित्रयन्त्रा चित्तन्त्रा विद्यावल्ली गतिः शुभा।
कूटारकूटा कूटस्था पञ्चकूटा च पञ्चमी॥ ५०॥

चतुष्कूटा त्रिकूटाद्या षट्कूटा वेदपूजिता।
कूटषोडशसंपन्ना तुरीया परमा कला॥ ५१॥

---

*1.* पदद्वन्द्वा रुणांभोजा नखचन्द्रा रविप्रभा। सुसोमप्रपदा राजहंसा मत्तेभमन्दगा॥ इत्यधिकम्।

षोड शी मन्त्रयन्त्राणामीश्वरी मेरुमण्ड ला।
षोड शार्णा त्रिवर्णा च बिन्दुनादस्वरूपिणी ॥ ५२ ॥

वर्णातीता वर्णमाला शब्दब्रह्म महासुखा।
चैतन्यवल्ली कूट त्मा कामेशी स्वप्नदृश्यगा ॥ ५३ ॥

स्वप्नावती बोधकरी जागृतिर्जागराश्रया।
स्वप्नाश्रया सुषुप्तिश्च तन्द्रामुक्ता च माधवी ॥ ५४ ॥

लोपामुद्रा कामराज्ञी मानवी वित्तपार्चिता।
शाकम्भरी नन्दिविद्या भास्वद्विद्योतमालिनी ॥ ५५ ॥

माहेन्द्री स्वर्गसंपत्तिर्दुर्वासःसेविता श्रुतिः ।
साधकेन्द्रगतिः साध्वी सुलभा सिद्धिकन्दरा ॥ ५६ ॥

पुरत्रयेशी पुरजिदर्चिता पुरदेवता।
पुष्टि र्विघ्नहरी भूतिर्विगुणा पूज्यकामधुक् ॥ ५७ ॥

हिरण्यमाता गणपा गुहमाता नितम्बिनी।
सर्वसीमन्तिनी मोक्षा दीक्षा दीक्षितमातृका ॥ ५८ ॥

साधकाम्बा सिद्धमाता साधकेन्द्रा मनोरमा।
यौवनोन्मादिनी तुङ्गा सुश्रोणिर्मदमन्थरा ॥ ५९ ॥

पद्मरक्तोत्पलवती रक्तमाल्यानुलेपना।
रक्तमालारुचिः शिखाशिखण्डि न्यतिसुन्दरी ॥ ६० ॥

शिखण्डि नृत्तसन्तुष्ट । सौरभेयी वसुन्धरा।
सुरभिः कामदा काम्या कमनीयार्थकामदा ॥ ६१ ॥

नन्दिनी लक्षणवती वसिष्ठ ालयदेवता।
गोलोकदेवी (४००) लोकश्रीर्गोलोकपरिपालिका ॥ ६२ ॥

हविर्धानी देवमाता बृन्दारकवरानुयुक्।
रुद्रपत्नी भद्रमाता सुधाधाराऽम्बुविक्षतिः ।। ६३ ।।

दक्षिणा यज्ञसंमूर्तिः सुबाला धीरनन्दिनी।
क्षीरपूर्णार्णवगतिः सुधायोनिः सुलोचना ।। ६४ ।।

रामानुगा सुसेव्या च सुगन्धालयवासगा।
सुचारित्रा सुत्रिपुरा सुस्तनी स्तनवत्सला ।। ६५ ।।

रजस्वला रजोयुक्ता रञ्जिका रङ्गमालिका।
रक्तप्रिया सुरक्ता च रतिरङ्गस्वरूपिणी ।। ६६ ।।

रजः शुक्राम्बिका निष्ठा रतनिष्ठा रतिस्पृहा।
हावभावा कामकेलिसर्वस्वा सुरजीविका ।। ६७ ।।

स्वयम्भूकुसुमानन्दा स्वयम्भूकुसुमप्रिया।
स्वयम्भूप्रीतिसन्तुष्टा स्वयम्भूनिन्दकान्तकृत् ।। ६८ ।।

स्वयम्भूस्था शक्तिपुटी रतिसर्वस्वपीठिका।
अत्यन्तसम्भिका दूती विदग्धा प्रीतिपूजिता ।। ६९ ।।

कुब्लिका यन्त्रनिलया योगपीठाधिवासिनी।
सुलक्षणा रसरूपा सर्वलक्षणलक्षिता ।। ७० ।।

नानालङ्कारसुभगा पञ्चबाणसमर्च्चिता।
ऊर्ध्वत्रिकोणनिलया बाला कामेश्वरी तथा ।। ७१ ।।

गणाध्यक्षा कुलाध्यक्षा लक्ष्मीश्चैव सरस्वती।
वसन्तसमयप्रीता प्रीतिः कुचभरानता ।। ७२ ।।

कलाधरमुखाऽमूर्धा पादवृद्धिः कलावती।
पुष्पप्रिया धृतिश्चैव रतिकण्ठी मनोरमा ।। ७३ ।।

मदनोन्मादिनी चैव मोहिनी पार्वणीकला।
शोषिणी वशिनी राजिन्यत्यन्तसुभगा भगा॥ ७४॥

पूषा वशा च सुमना रतिः प्रीतिर्धृतिस्तथा।
ऋद्धिः सौम्या मरीच्यंशुमाला प्रत्यङ्गिरा तथा॥ ७५॥

शशिनी चैव सुच्छाया संपूर्णमण्डलोदया।
तुष्टा चामृतपूर्णा च भगयन्त्रनिवासिनी॥ ७६॥

लिङ्गयन्त्रालया(५००) शम्भुरूपा संयोगयोगिनी।
द्राविणी बीजरूपा च अक्षुब्धा साधकप्रिया॥ ७७॥

राजबीजमयी राज्यसुखदा वाञ्छितप्रदा।
रजःसंवीर्यशक्तिश्च शुक्रविच्छिवरूपिणी॥ ७८॥

सर्वसारा सारमया शिवशक्तिमयी प्रभा।
संयोगानन्दनिलया संयोगप्रीतिमातृका॥ ७९॥

संयोगकुसुमानन्दा संयोगा योगवर्धिनी।
संयोगसुखदावस्था चिदानन्दैकसेविता॥ ८०॥

अर्घ्यपूजकसंपत्तिरर्घ्यद्रव्यस्वरूपिणी।
सामरस्या परा प्रीता प्रियसङ्गमरूपिणी॥ ८१॥

ज्ञानदूती ज्ञानगम्या ज्ञानयोनिः शिवालया।
चित्कला ज्ञानसकला सकुला सकुलात्मिका॥ ८२॥

कलाचतुष्टयी पद्मिन्यतिसूक्ष्मा परात्मिका।
हंसकेलिस्थलीच्छाया हंसद्वयविकासिनी॥ ८३॥

विरागता मोक्षकला परमात्मकलावती।
विद्याकलान्तरात्मस्था चतुष्टयकलावती॥ ८४॥

विद्यासन्तोषिणी तृप्तिः परब्रह्मप्रकाशिका ।
परमात्मपरा वस्तुलीनशक्तिचतुष्ट यी ॥ ८५ ॥

शान्तिर्बोधकलावाप्तिः परज्ञानात्मिका कला ।
पश्यन्ती परमात्मस्था चान्तरात्मकलाकुला ॥ ८६ ॥

मध्यमा वैखरी चात्मकलानन्दा कलावती ।
तारिणी तरणी तारा शिवलिङ्गालयाऽऽत्मवित् ॥ ८७ ॥

परस्परशुभाचारा ब्रह्मानन्दविनोदिनी ।
रसालसा दूतरासा सार्था सार्थप्रिया ह्युमा ॥ ८८ ॥

जात्यादिरहिता योगियोगिन्यानन्दवर्धिनी ।[1]
वीरभावप्रदा दिव्या वीरसूर्वीरभावदा ॥ ८९ ॥

पशुत्वाभिवीरगतिर्वीरसङ्गमहोदया ।
मूर्धाभिषिक्त राजश्रीः क्षत्रियोत्तममातृका ॥ ९० ॥

शस्त्रास्त्रकुशला शोभा रसस्था युद्धजीविका ।
विजया योगिनी यात्रा परसैन्यविमर्दिनी ॥ ९१ ॥

पूर्णा(६००) वित्तैषिणी वित्ता वित्तसञ्चयशालिनी ।
भाण्ड ागारस्थिता रत्ना रत्नश्रेण्यधिवासिनी ॥ ९२ ॥

महिषी राजभोग्या च गणिका गणभोगभृत् ।
करिणी वड वा योग्या मल्लसेना पदातिका ॥ ९३ ॥

सैन्यश्रेणी शौर्यरता पताका ध्वजवासिनी ।
सुच्छ त्रा चाम्बिका चाम्बा प्रजापालनसद्गतिः ॥ ९४ ॥

सुरभिः पूजकाचारा राजकार्यपरायणा ।
ब्रह्मक्षत्रमयी सोमसूर्यान्तर्यामिनी स्थितिः ॥ ९५ ॥

1. कान्ता शान्ता दान्तगतिर्वेदाद्युद्दामपद्धतिः इत्यधिकम

पौरोहित्यप्रिया साध्वी ब्रह्माणी यज्ञसन्ततिः।
सोमपानपरा प्रीता जनाढ्या तपना क्षमा ॥ ९६ ॥

प्रतिग्रहपरा दात्री सृष्टा जातिः सतांगतिः।
गायत्री वेदलभ्या च दीक्षा सन्ध्यापरायणा ॥ ९७ ॥

रत्नसद्दीधितिर्विश्ववासना विश्वजीविका।
कृषिवाणिज्यभूतिश्च वृद्धिर्धीश्च कुसीदिका ॥ ९८ ॥

कुलाधारा सुप्रसारा मनोन्मनी परायणा।
शूद्रा विप्रगतिः कर्मकरी कौतुकपूजिता ॥ ९९ ॥

नानाविचारचतुरा बाला प्रौढा कलामयी।
सुकर्णधारा नौः पारा सर्वाशा दुर्गमोचनी ॥ १०० ॥

दुर्गा विन्ध्यवनस्था च कन्दर्पनयपूरणी।
भूभारशमनी कृष्णा रक्षाराध्या रसोल्लसा ॥ १०१ ॥

त्रिविधोत्पातशमनी समग्रसुखशेवधिः।
पञ्चावयववाक्यश्रीः प्रपञ्चोद्यानचन्द्रिका ॥ १०२ ॥

सिद्धसन्दोहसुखिता योगिनीवृन्दवन्दिता।
नित्याषोडशरूपा च कामेशी भगमालिनी ॥ १०३ ॥

नित्यक्लिन्ना च भी(भे)रुण्डा वह्निमण्डलवासिनी।
महाविद्येश्वरीनित्या शिवदूतीतिविश्रुता ॥ १०४ ॥

त्वरिताप्रथिता ख्याता विख्याता कुलसुन्दरी।
नित्या नीलपताका च विजया सर्वमङ्गला ॥ १०५ ॥

ज्वालामाला(७००) विचित्रा च महात्रिपुरसुन्दरी।
गुरुवृन्दा परगुरुः प्रकाशानन्दनाथिनी ॥ १०६ ॥

शिवानन्दनाथरूपा शक्त्यानन्दस्वरूपिणी।
देव्यानन्दनाथमयी कौलेशानन्दनाथिनी॥ १०७॥

दिव्यौघगुरुरूपा च समयानन्दनाथिनी।
शुक्लदेव्यानन्दनाथा कुलेशानन्दनाथिनी[1] ॥ १०८॥

क्लिन्नाज्ञानन्दरूपा च समयानन्दनाथिनी।
वेदानन्दनाथमयी सहजानन्दनाथिनी॥ १०९॥

सिद्धौघगुरुरूपा च अपरागुरुरूपिणी।
गगनानन्दनाथा च विश्वानन्दस्वनाथिनी॥ ११०॥

विमलानन्दनाथा च मदनानन्दनाथिनी।
भुवनाद्या च लीलाद्या नन्दनानन्दनाथिनी॥ १११॥

स्वात्मानन्दानन्दरूपा प्रियाद्यानन्दनाथिनी।
मानवौघगुरुश्रेष्ठा परमेष्ठि गुरुप्रभा॥ ११२॥

परगुह्या गुरुशक्तिः स्वगुरुकीर्तनप्रिया।
त्रैलोक्यमोहनख्याता सर्वाशापरिपूरका॥ ११३॥

सर्वसंक्षोभिणी पूर्वाम्नायप्रथितवैभवा।
शिवाशक्तिः शिवशक्तिः शिवचक्रत्रयालया॥ ११४॥

सर्वसौभाग्यदाख्या च सर्वार्थसाधिकाह्वया।
सर्वरक्षाकराख्या च दक्षिणाम्नायदेवता॥ ११५॥

मध्यार्कचक्रनिलया पश्चिमाम्नायदेवता।
नवचक्रकृतावासा कौबेराम्नायदेवता॥ ११६॥

कुबेरपूज्या कुलजा कुलाम्नायप्रवर्तिनी।
बिन्दुचक्रकृतावासा मध्यसिंहासनेश्वरी॥ ११७॥

---

1. कामेश्वर्यानन्दनाथमयी श्रीगुरुरूपिणी इत्यधिकम्

श्रीविद्या च महालक्ष्मीः लक्ष्मीः शक्तित्रयात्मिका।
सर्वसाम्राज्यलक्ष्मीश्च पञ्चलक्ष्मीतिविश्रुता॥ ११८॥

श्रीविद्या च परज्योतिः परनिष्कलशाम्भवी।
मातृका पञ्चकोशी च श्रीविद्या त्वरिता तथा॥ ११९॥

पारिजातेश्वरी चैव त्रिकूटा पञ्चबाणगा।
पञ्चकल्पलता पञ्चविद्या चामृतपीठिका॥ १२०॥

सुधासू रमणेशाना चान्नपूर्णा च कामधुक्।
श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी॥ १२१॥

वाराही पञ्चरत्नानामीश्वरी मातृवर्णगा।
पराज्योतिः कोशरूपा ऐन्दवी कलया युता॥ १२२॥

परितः स्वामिनी शक्तिदर्शना रविबिन्दुयुक्।
ब्रह्मदर्शनरूपा च शिवदर्शनरूपिणी॥ १२३॥

विष्णुदर्शनरूपा च सृष्टि चक्रनिवासिनी।
सौरदर्शनरूपा च स्थितिचक्रकृतालया॥ १२४॥

बौद्धदर्शनरूपा च महात्रिपुरसुन्दरी।
तत्त्वमुद्रास्वरूपा च प्रसन्ना(८००) ज्ञानमुद्रिका॥ १२५

सर्वोपचारसन्तुष्टा हृन्मयी शीर्षदेवता।
शिखास्थिता ब्रह्ममयी नेत्रत्रयविलासिनी॥ १२६॥

अस्त्रस्था चतुरस्रा च द्वारका द्वारवासिनी।
अणिमा पश्चिमस्था च लघिमोत्तरदेवता॥ १२७॥

पूर्वस्था महिमेशित्वा दक्षिणद्वारदेवता।
वशित्वा वायुकोणस्था प्राकाम्येशानदेवता॥ १२८॥

अग्निकोणस्थिता भुक्तिरिच्छा नैर्ऋतवासिनी।
प्राप्तिसिद्धिरवस्था च प्राकाम्यार्थविलासिनी॥ १२९॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराह्यैन्द्री च चामुण्डा महालक्ष्मीर्दिशांगतिः॥ १३०॥

क्षोभिणी द्राविणीमुद्राऽऽकर्षोन्मादनकारिणी।
महाङ्कुशा खेचरी च बीजाख्या योनिमुद्रिका॥ १३१

सर्वाशापूरचक्रस्था कार्यसिद्धिकरी तथा।
कामाकर्षिणिकाशक्तिर्बुद्ध्याकर्षणरूपिणी॥ १३२॥

अहङ्काराकर्षिणी च शब्दाकर्षणरूपिणी।
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी॥ १३३॥

रसाकर्षणरूपा च गन्धाकर्षणरूपिणी।
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी॥ १३४॥

स्मृत्याकर्षणरूपा च बीजाकर्षणरूपिणी।
अमृताकर्षिणी चैव नामाकर्षणरूपिणी॥ १३५॥

शरीराकर्षिणीदेवी आत्माकर्षणरूपिणी।
षोडशस्वररूपा च स्रवत्पीयूषमन्दिरा॥ १३६॥

त्रिपुरेशी सिद्धरूपा कलादलनिवासिनी।
सर्वसंक्षोभचक्रेशी शक्तिर्गुप्ततराभिधा॥ १३७॥

अनङ्गकुसुमाशक्तिरनङ्गकटिमेखला।
अनङ्गमदनाऽनङ्गमदनातुररूपिणी॥ १३८॥

अनङ्गरेखा चानङ्गवेगानङ्गाङ्कुशाभिधा।
अनङ्गमालिनी शक्तिरष्टवर्गदिगन्विता॥ १३९॥

वसुपत्रकृतावासा श्रीमत्त्रिपुरसुन्दरी।
सर्वसाम्राज्यसुखदा सर्वसौभाग्यदेश्वरी॥ १४० ॥

संप्रदायेश्वरी सर्वसंक्षोभणकरी तथा।
सर्वविद्राविणी सर्वाकर्षणाटोपकारिणी॥ १४१ ॥

सर्वाह्लादनशक्तिश्च सर्वजृम्भणकारिणी।
सर्वस्तम्भन शक्तिश्च सर्वसंमोहिनी तथा॥ १४२ ॥

सर्ववश्यकरीशक्तिः सर्वसर्वानुरञ्जिनी।
सर्वोन्मादनशक्तिश्च सर्वार्थसिद्धिकारिणी॥ १४३ ॥

सर्वसम्पत्तिदाशक्तिः सर्वमन्त्रमयी तथा।
सर्वद्वन्द्वक्षयकरी(९००) सिद्धिस्त्रिपुरवासिनी॥ १४४ ॥

सर्वार्थसाधकेशी च सर्वकार्यार्थसिद्धिदा।
चतुर्दशारचक्रेशी कलायोगसमन्विता॥ १४५ ॥

सर्वसिद्धिप्रदादेवी सर्वसंपत्प्रदा तथा।
सर्वप्रियङ्करीशक्तिः सर्वमङ्गलकारिणी॥ १४६ ॥

सर्वकामप्रपूर्णा च सर्वदुःखप्रमोचिनी।
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी॥ १४७ ॥

सर्वाङ्गसुन्दरीदेवी सर्वसौभाग्यदायिनी।
त्रिपुरेशी सर्वसिद्धिप्रदा च दशकोणगा॥ १४८ ॥

सर्वरक्षाकरेशी च निगर्भा योगिनी तथा।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा। १४९ ॥

सर्वज्ञानमयीदेवी सर्वव्याधिविनाशिनी।
सर्वाधारस्वरूपा च सर्वपापहरा तथा॥ १५० ॥

सर्वानन्दमयीदेवी सर्वरक्षास्वरूपिणी।
महिमाशक्तिदेवी च देवी सर्वसमृद्धिदा॥ १५१॥

अन्तर्दशारचक्रेशी देवी त्रिपुरमालिनी।
सर्वरोगहरेशी च रहस्या योगिनी तथा॥ १५२॥

वाग्देवी वशिनी चैव देवीकामेश्वरी तथा।
मोदिनी विमला चैव अरुणा जयिनी तथा॥ १५३॥

सर्वेश्वरी कौलिनी च ह्यष्ट ारसर्वसिद्धिदा।
सर्वकामप्रदेशी च परापररहस्यवित्॥ १५४॥

त्रिकोणचतुरश्रस्था सर्वैश्वर्याऽऽयुधात्मिका।
कामेश्वरीबाणरूपा कामेशीचापरूपिणी॥ १५५॥

कामेशीपाशरूपा च कामेश्यङ्कुशरूपिणी।
कामेश्वरीन्द्रशक्तिश्च अग्निचक्रकृतालया॥ १५६॥

कामगिर्यधिदेवी च त्रिकोणस्थाऽग्रकोणगा।
दक्षकोणेश्वरी विष्णुशक्तिर्जालन्धराश्रया॥ १५७॥

सूर्यचक्रालया रुद्रशक्तिर्वामाङ्गकोणगा।
सोमचक्रा ब्रह्मशक्तिः पूर्णगिर्यनुरागिणी॥ १५८॥

श्रीमत्त्रिकोणभुवना त्रिपुरात्मा महेश्वरी।
सर्वानन्दमयेशी च बिन्दुगातिरहस्यभृत्॥ १५९॥

परब्रह्मस्वरूपा च महात्रिपुरसुन्दरी।
सर्वचक्रान्तरस्था च समस्तचक्रनायिका॥ १६०॥

सर्वचक्रेश्वरी सर्वमन्त्राणामीश्वरी तथा।
सर्वविद्येश्वरी चैव सर्ववागीश्वरी तथा॥ १६१॥

सर्वयोगीश्वरी चैव पीठैश्वर्यखिलेश्वरी।
सर्वकामेश्वरी सर्वतत्त्वेश्वर्यागमेश्वरी ॥ १६२ ॥

शक्तिः शक्तिधृगुल्लासा निर्द्वन्द्वा द्वैतगर्भिणी।
निष्प्रपञ्चा महामाया सप्रपञ्चा सुवासिनी ॥ १६३ ॥

सर्वविश्वोत्पत्तिधात्री परमानन्दसुन्दरी (१०००)।
इत्येतत्कथितं दिव्यं परमानन्दकारणम् ॥ १६४ ॥

लावण्यसिन्धुलहरीबालायास्तोषमन्दिरम्।
सहस्रनाम तन्त्राणां सारमाकृष्य पार्वति ॥ १६५ ॥

अनेन स्तुवतो नित्यमर्धरात्रे निशामुखे।
प्रातःकाले च पूजायां सर्वकालमतः प्रिये ॥ १६६ ॥

सर्वसाम्राज्यसुखदा बाला च परितुष्यति।
रत्नानि विविधान्यस्य वित्तानि प्रचुराणि च ॥ १६७ ॥

मनोरथपथस्थानि ददाति परमेश्वरी।
पुत्राः पौत्राश्च वर्धन्ते सन्ततिः सार्वकालिकी ॥ १६८ ॥

शत्रवस्तस्य नश्यन्ति वर्धन्तेऽस्य बलानि च।
व्याधयस्तस्य दूरस्थाः सकलान्यौषधानि च ॥ १६९ ॥

मन्दिराणि विचित्राणि राजन्ते तस्य सर्वदा।
कृषिः फलवती तस्य भूमिः कामदुघाऽव्यया ॥ १७० ॥

स्फीतो जनपदस्तस्य राज्यं तस्य निरीतिकम्।
मातङ्गाः पक्षिणस्तुङ्गाः सिञ्चन्तो मदवारिभिः ॥ १७१ ॥

द्वारे तस्य विराजन्ते हृष्टा नागतुरङ्गमाः।
प्रजास्तस्य विराजन्ते निर्विवादाश्च मन्त्रिणः ॥ १७२ ॥

ज्ञातयस्तस्य तुष्यन्ति शीलं तस्यातिसुन्दरम्।
लक्ष्मीस्तस्य वशे नित्यं स्वासना च मनोरमा ॥ १७३ ॥

गद्यपद्यमयी वाणी तस्य गङ्गातरङ्गवत्।
नानापदपदार्थानां वादचातुर्यसंभृता ॥ १७४ ॥

समग्ररससंपत्तिशालिनी लास्यमालिनी।
अदृष्टान्यपि शास्त्राणि प्रकाश्यन्ते निरन्तरम् ॥ १७५ ॥

निग्रहः परवाक्यानां सभायां तस्य जायते।
स्तुवन्ति वन्दिनस्तं वै राजानो दासवत्तथा ॥ १७६ ॥

शस्त्राण्यस्त्राणि तदङ्गे जनयन्ति रुजां नहि।
महिलास्तस्य वशगाः सर्वावस्था भवन्ति वै ॥ १७७ ॥

विषं निर्विषतां याति पानीयममृतं भवेत्।
परपक्षस्तम्भनं च प्रतिपक्षस्य जृम्भणम् ॥ १७८ ॥

नवरात्रेण जायेत स तदभ्यासयोगवित्।
अहोरात्रं पठेद्यस्तु निस्तन्द्रः शान्तमानसः ॥ १७९ ॥

वशे तस्य प्रजा याति सर्वे लोकाः सुनिश्चितम्।
षण्मासाभ्यासयोगेन योगमायाति निश्चितम् ॥ १८० ॥

नित्यं कामकलां ध्यायन् यः पठेत् स्तोत्रमुत्तमम्।
मदनोन्मादकलिताः पुरन्ध्र्यास्तद्वशानुगाः ॥ १८१ ॥

लावण्यमदनाः साक्षाद्वैदग्ध्यमुदितेक्षणाः।
प्रेमपूर्णामपि वशे ह्युर्वशीं स हि विन्दति ॥ १८२ ॥

भूर्जपत्रे रोचनया कुङ्कुमेन शुभे दिने।
लाक्षारसद्रवेणापि यावकैर्वा विशेषतः ॥ १८३ ॥

धातुरागेण वा देवि लिखितं यन्त्रमञ्चितम्।
सुवर्णरौप्यगर्भस्थं सुसंपूतं सुसाधितम्॥ १८४॥

बालाबुद्ध्या पूजितं च प्रतिष्ठि तसमीरणम्।
धारयेन्मस्तके कण्ठे बाहुमूले तथा हृदि॥ १८५॥

नाभौ वापि धृतं धन्यं जयदं सर्वकामदम्।
रक्षणं नापरं किञ्चिद्विद्यते भुवनत्रये॥ १८६॥

ग्रहरोगादिभयहृत् सुखकृत्यविवर्धनम्।
बलवीर्यकरं क्रूरभूतशत्रुविनाशनम्॥ १८७॥

पुत्रपौत्रान् गुणगणैर्वर्धनं धनधान्यकृत्।
धरण्यां सा पुरी धन्या यत्रायं साधकोत्तमः॥ १८८॥

यद्गृहे लिखितं तिष्ठे त् स्तोत्रमेतद्वरानने।
तत्र चाहं शिवे नित्यं हरिश्च कमला तथा॥ १८९॥

वसामः सर्वतीर्थानामुत्पत्तिस्तत्र जायते।
यो वापि पाठ येद् भक्त्या पठेद्वै साधकोत्तमः॥ १९०॥

ज्ञानानन्दकलायोगादैक्यवृत्तिं स विन्दति।
स्तोत्रेणानेन देवेशि तव पूजाफलं लभेत्॥ १९१॥

षोढ ान्यासतनुर्भूत्वा पठि तव्यं प्रयत्नतः।
उत्तमा सर्वतन्त्राणां बालायाः पूजनस्तुतिः॥ १९२॥

तत्रोत्तमा षोड शार्णा तत्रेदं स्तोत्रमुत्तमम्।
नाशिष्याय प्रदातव्यमशुद्धाय शठ ाय च॥ १९३॥

अलसायाप्रयत्नायाशिवाभक्ताय सुन्दरि।
भक्ति हीनाय मलिने गुरुनिन्दापराय च॥ १९४॥

विष्णुभक्तिविहीनाय विकल्पावृतबुद्धये।
देयं भक्तवरे मुक्तेः कारणं भक्तिवर्धनम्॥ १९५॥

लतायोगे पठेद्यस्तु स्तोत्रमेतद्वरानने।
सैव कल्पलता तस्य वाञ्छाफलकरी तथा॥ १९६॥

पुष्पिताया लतायोगे कुरङ्गमुखि साधकः।
अक्षुब्धः सन् पठेद्यस्तु शतयज्ञस्य पुण्यभाक्॥ १९७॥

ब्रह्मादयोऽपि देवेशि प्रार्थयन्ति पदद्वयम्।
स्वयं शिवः स विज्ञेयो यो बालाभावलम्पटः॥ १९८॥

ब्रह्मानन्दमयी ज्योत्स्ना सदाशिवविधूदिता।
आनन्दो योऽपि यं वेदा वदन्त्यस्या वशे स्थिताः॥ १९९।

आह्लादनं बालाध्यानाद्बालाया नामकीर्तनात्।
सदानन्दाभ्यासयोगात् सदानन्दः प्रजायते॥ २००॥

(रुद्रयामलतः)

# श्रीबालासहस्रनामावलिः - २

ओं ऐं ह्रीं श्रीं— आनन्दसिन्धवे नमः। आनन्दायै नमः। आनन्दमूर्तये नमः। विनोदिन्यै नमः। त्रिपुरायै सुन्दर्यै नमः। प्रेमपाथो निधये नमः। अनुत्तमायै नमः। वामार्धगह्वरायै नमः। भूत्यै नमः। विभूत्यै नमः। शङ्कर्यै नमः। शिवायै नमः। शृंगारमूर्तये नमः। वरदायै नमः। रसायै नमः। शुभगोचरायै नमः। परमानन्दलहर्यै नमः। रत्यै नमः। रङ्गवत्यै गतये नमः। रङ्गमालायै नमः। २०

अनङ्गकलायै नमः । केल्यै नमः । कैवल्यदायै नमः । कलायै नमः । रसकल्पायै नमः । कल्पलतायै नमः । कुतूहलवत्यै गतये नमः । विनोददिग्धायै नमः । सुस्निग्धायै नमः । मुग्धमूर्तये नमः । मनोरमायै नमः । बालार्ककोटि किरणायै नमः । चन्द्रकोटि - सुशीतलायै नमः । स्रवत्पीयूषदिग्धांग्यै नमः । स्वगार्थपरि- कल्पितायै नमः । कुरङ्गनयनायै नमः । कान्तायै नमः । सुगतये नमः । सुखसन्तत्यै नमः[1] । राजराजेश्वर्यै नमः । ४०

राज्ञ्यै नमः । महेन्द्रपरिवन्दितायै नमः । प्रपञ्चगतये नमः । ईशान्यै नमः । प्रपञ्चगतये उत्तमायै नमः । दुर्वाससे नमः । दुःसहायै नमः । शक्तये नमः । शिञ्जत्कनकनूपुरायै नमः । मेरुमन्दरवक्षोजायै नमः । सृणिपाशवरायुधायै नमः । शरकोदण्ड संसक्तपाणिद्वय विराजितायै नमः । चन्द्रबिम्बाननायै नमः । चारुमकुटायै नमः । उत्तंसचन्द्रिकायै नमः । सिन्दूरतिलकायै नमः । चारुधम्मिल्लायै नमः । अमलमालिकायै नमः । मन्दारदाममुदितायै नमः । रत्नमालाविभूषितायै नमः ६०

सुवर्णाभरणप्रीतायै नमः । मुक्तादाममनोरमायै नमः । तांबूलपूर्णवदनायै नमः । मदनानन्दमानसायै नमः । सुखाराध्यायै नमः । तपस्सारायै नमः । कृपापारायै नमः । विधीश्वर्यै नमः । वक्षः स्थललसद्रत्नप्रभायै नमः । मधुरसोन्मदायै नमः । बिन्दुनादात्मकोच्चाररहितायै नमः । तुर्यरूपिण्यै नमः । कमनीयाकृतये नमः । धन्यायै नमः । शाङ्कर्यै नमः । प्रीतिञ्जयै नमः। प्रपञ्चायै नमः । पञ्चम्यै नमः । पूर्णायै नमः । पूर्णपीठ निवासिन्यै नमः । ८०

1. इन्दिरायै मधुरापाङ्गायै, मङ्गलायै, गीतरत्नदायै इत्यधिकम्।

राज्यलक्ष्म्यै नमः । श्रीलक्ष्म्यै नमः । महालक्ष्म्यै नमः । सुराजिकायै नमः । सन्तोषसीमायै नमः । संपत्तये नमः । शातकौम्भ्यै नमः[1] । द्युतये नमः परिपूर्णायै नमः । जगद्धात्र्यै नमः । विधात्र्यै नमः । बलवर्धिन्यै नमः । सार्वभौमनृपश्रियै नमः । साम्राज्यगतये नमः । अम्बिकायै नमः । सरोजाक्ष्यै नमः । दीर्घदृष्ट ये नमः । साचीक्षणविचक्षणायै नमः । रङ्गस्रवन्त्यै नमः । रसिकायै नमः । १००

प्रधानायै नमः । रसरूपिण्यै नमः । रससिन्धवे नमः । सुगात्र्यै नमः। धूसर्यै नमः । मैथुनोन्मुखायै नमः । निरन्तरगुणासक्तायै नमः । निधुवनात्मिकायै शक्तये नमः । कामाक्ष्यै नमः । कमनीयायै नमः । कामेश्यै नमः । भगमङ्गलायै नमः । सुभगायै नमः । भोगिन्यै नमः । भोग्यायै नमः । भाग्यदायै नमः । सुभगायै नमः । भगायै नमः । भगलिङ्गायै नमः । आनन्दकलायै नमः । १२०

भगमध्यनिवासिन्यै नमः । भगरूपायै नमः । भगमय्यै नमः । भगयन्त्रायै नमः । भगोत्तमायै नमः । योनिमुद्रायै नमः । कामकलायै नमः । कुलामृतपरायणायै नमः । कुलकुण्ड ालयायै नमः । सूक्ष्मायै नमः । जीवात्मने नमः । लिङ्गरूपिण्यै नमः । मूलक्रियायै नमः । मूलरूपायै नमः । मूलाकृतिस्वरूपिण्यै नमः । सोत्सुकायै नमः । कमलानन्दायै नमः । चिद्भावायै नमः । आत्मगतये नमः । शिवायै नमः । १४०

श्वेतायै नमः । अरुणायै नमः । बिन्दुरूपायै नमः । वेदयोनये नमः । ध्वनिक्षणायै नमः । घण्ट ाकोटि रवारावायै नमः ।

---

1. शातकुंभप्रियायै कृत्यै,

रविविम्बोत्थितायै नमः । अद्भुतायै नमः । नादान्तलीनायै नमः । संपूर्णायै नमः । पूर्णस्थायै नमः । बहुरूपिकायै नमः । भृङ्गारावायै नमः । वंशगतये नमः । वादित्रायै नमः । मुरजध्वनये नमः । वर्णमालायै नमः । सिद्धिकलायै नमः । षट् चक्रक्रमवासिन्यै नमः । मूलकेलीरतायै नमः । १६०

स्वाधिष्ठानायै नमः । तुर्यनिवासिन्यै नमः । मणिपूरस्थितये नमः । स्निग्धायै नमः । कूर्मचक्रपरायणायै नमः । अनाहतगतये नमः । दीपशिखायै नमः । मणिमयाकृतये नमः । विशुद्धायै नमः । शब्दसंशुद्धायै नमः । जीवबोधस्थल्यै नमः । रवायै नमः । आज्ञाचक्राब्जसंस्थायै नमः । स्फुरन्त्यै नमः । निपुणायै नमः । त्रिवृते नमः । चन्द्रिकायै नमः । चन्द्रकोटि श्रियै नमः । सूर्यकोटि प्रभामय्यै नमः । पद्मरागारुणच्छायायै नमः । १८०

नित्यायै नमः । आह्लादमय्यै नमः । प्रभायै नमः । पानश्रियै नमः । प्रियामात्यायै नमः । निश्चलायै नमः । अमृतनन्दिन्यै नमः । कान्ताङ्गसङ्गमुदितायै नमः । सुधामाधुर्यसंभृतायै नमः । महामश्चस्थितायै नमः । अलिसायै नमः । तृप्तायै नमः । दृप्तायै नमः । सुसंभृतये नमः । स्रवत्पीयूषसंसिक्तायै नमः । रक्तार्णवविवर्धिन्यै नमः । सुरक्तायै नमः । प्रियसंसिक्तायै नमः । शश्वत्कुण्डालयायै नमः । अभयायै नमः । २००

श्रेयः श्रुतये नमः । प्रत्येकानवकेशिफलावल्यै नमः। प्रीतायै नमः । शिवायै नमः । शिवप्रियायै नमः । शाङ्कर्यै नमः । शांभव्यै नमः । विभायै नमः । स्वयंभुवे नमः । स्वप्रियायै नमः । स्वीयायै नमः । स्वकीयायै नमः । जनमातृकायै नमः । स्वारामायै नमः । स्वाश्रयायै नमः । साध्व्यै नमः । सुधाधाराधिकाधिकायै नमः । मङ्गलायै नमः । उज्जयिन्यै नमः । मान्यायै नमः । २२०

सर्वमङ्गलसङ्गिन्यै नमः । भद्रायै नमः । भद्रावल्यै नमः । कन्यायै नमः । कलितार्धेन्दुबिम्बभाजे नमः । कल्याणलतिकायै नमः । काम्यायै नमः । कुकर्मणे नमः । कुमतये नमः । मनवे नमः । कुरङ्गाक्ष्यै नमः । क्षीबनेत्रायै नमः । क्षारायै नमः । रसमदोन्मदायै नमः । वारुणीपानमुदितायै नमः । मदिरारञ्चिताश्रयायै नमः । कादम्बरीपानरुचये नमः । विपाशायै नमः । पाशभीतिनुदे नमः । मुदितायै नमः । २४०

मुदितापाङ्गायै नमः । दरदोलितदीर्घदृशे नमः । दैत्यकुलानलशिखायै नमः । मनोरथसुधाद्युतये नमः । सुवासिन्यै नमः । पीनगात्र्यै नमः । पीनश्रोणिपयोधरायै नमः । सुचारुकबर्यै नमः । दन्तदीधितिदीप्रमौक्तिकायै नमः । बिम्बाधरायै नमः । द्युतिमुखायै नमः । प्रवालोत्तमदीधितये नमः । तिलप्रसूननासाग्रायै नमः । हेमकक्कोलभालकायै नमः । निष्कलङ्केन्दुवदनायै नमः । बालेन्दुमुकुटोज्ज्वलायै नमः । नृत्यत्खञ्जननेत्रश्रिये नमः । विस्फुरत्कर्णशष्कुल्यै नमः । बालचन्द्रातपत्राधार्यै नमः । मणिसूर्यकिरीटिन्यै नमः।[1] । २६०

हेममाणिक्यताटङ्कायै नमः । मणिकाञ्चनकुण्डलायै नमः । सुचारुचिबुकायै नमः । कम्बुकण्ठ्यै नमः । मणिमनोरमायै नमः । गङ्गातरङ्गहारोर्मये नमः । मत्तकोकिलनिःस्वनायै नमः । मृणालविलसद्बाहवे नमः । पाशाङ्कुशधनुर्धरायै नमः । केयूरकटकाच्छन्नायै नमः । नानारत्नमनोरमायै नमः । ताम्रपङ्कजपाणिश्रिये नमः । नखरत्नप्रभावत्यै नमः। अङ्गुलीयमणिश्रेणिचञ्चदङ्गुलिसन्ततये नमः । मन्दरद्वन्द्वसुकुचायै नमः । रोमराजी

1. केशौघचंपकासेनायै, मालतीदामपण्डितायै इत्यधिकम्।

भुजङ्गकायै नमः । गंभीरनाभये नमः । त्रिवलीवलयायै नमः । सुमध्यमायै नमः । रणत्काञ्चीगुणोन्नद्धायै नमः । २८०

पट्टांशुकसुनीविकायै नमः । मेरुगुण्डीनितंबाढ्यायै नमः । गजगण्डोरुयुग्मयुजे नमः । सुजानुमन्दरासक्तकलसज्जंघा-द्वयान्वितायै नमः । गूढगुल्फायै नमः । मञ्जुशिञ्जन्मणिनूपुर मण्डितायै नमः ।[1] । योगिध्येयपदद्वन्द्वायै नमः । सुधामायै नमः । अमृतसारिण्यै नमः । लावण्यसिन्धवे नमः । सिन्दूरति लकायै नमः । कुटिलालकायै नमः । साधुसिद्धायै नमः । सुबुद्धायै नमः । बुधायै नमः । बृन्दारकोदयायै नमः । बालार्ककिरणश्रेणीशोणायै नमः । श्रीप्रेमकामदुघे नमः । रसगंभीरसरस्यै नमः । पद्मिन्यै नमः । ३००

रससारसायै नमः । प्रसन्नायै नमः । आसन्नवरदायै नमः । शारदायै नमः । सुभाग्यदायै नमः । नटराजप्रियायै नमः । विश्वनाट्यायै नमः । नर्तकनर्तक्यै नमः । विचित्रयन्त्रायै नमः । चित्तन्त्रायै नमः । विद्यावल्ल्यै नमः ।शुभायै गत्यै नमः । कूटारकूटायै नमः । कूटस्थायै नमः । पञ्चकूटायै नमः । पञ्चम्यै नमः । चतुष्कूटायै नमः । त्रिकूटाद्यायै नमः । षट्कूटायै नमः। वेदपूजितायै नमः । ३२०

कूटषोडशसंपन्नायै नमः । तुरीयायै नमः । परमायै कलायै नमः । षोडश्यै नमः । मन्त्रयन्त्राणामीश्वर्यै नमः । मेरुमण्डलायै नमः । षोडशार्णायै नमः । त्रिवर्णायै नमः । बिन्दुनादस्वरूपिण्यै नमः । वर्णातीतायै नमः । वर्णमात्रे नमः । शब्दब्रह्मणे नमः ।

---

1. पदद्वन्द्वारुणांभोजायै, नखचन्द्रायै, रविप्रभायै, सुसोमप्रपदायै, राजहंसायै, मत्तेभमन्दगायै इत्यधिकम् ।

महासुखायै नमः । चैतन्यवल्ल्यै नमः । कूट ात्मने नमः । कामेभ्यै नमः । स्वप्नदृश्यगायै नमः । स्वप्नावत्यै नमः । बोधकर्यै नमः । जागृतये नमः । ३४०

जागराश्रयायै नमः । स्वप्नाश्रयायै नमः । सुषुप्त्यै नमः । तन्द्रामुक्तायै नमः । माधव्यै नमः । लोपामुद्रायै नमः । कामराज्यै नमः । मानव्यै नमः । वित्तपार्चितायै नमः । शाकंभर्यै नमः । नन्दिविद्यायै नमः । भास्वद्विद्योतमालिन्यै नमः । माहेन्द्र्यै नमः । स्वर्गसंपत्तये नमः । दुर्वासः सेवितायै नमः । श्रुत्यै नमः । साधकेन्द्रगतये नमः । साध्व्यै नमः । सुलभायै नमः । सिद्धिकन्दरायै नमः । ३६०

पुरत्रयेश्यै नमः । पुरजिदर्चितायै नमः । पुरदेवतायै नमः । पुष्ट ्यै नमः। विघ्नहर्यै नमः । भूत्यै नमः । विगुणायै नमः । पूज्यकामदुहे नमः । हिरण्यमात्रे नमः । गणपायै नमः । गुहमात्रे नमः । नितंबिन्यै नमः । सर्वसीमन्तिन्यै नमः । मोक्षायै नमः । दीक्षायै नमः । दीक्षितमातृकायै नमः । साधकांबायै नमः । सिद्धमात्रे नमः । साधकेन्द्रायै नमः । मनोरमायै नमः । ३८०

यौवनोन्मादिन्यै नमः । तु ङ्गायै नमः । सुश्रोण्यै नमः । मदमन्थरायै नमः । पद्मरक्तोत्पलवत्यै नमः । रक्तमाल्यानुले पनायै नमः । रक्तमालारुचये नमः । शिखाशिखण्डि न्यै नमः । अतिसुन्दर्यै नमः । शिखण्डि नृत्तसन्तुष्ट ायै नमः । सौरभेय्यै नमः । वसुन्धरायै नमः । सुरभ्यै नमः । कामदायै नमः । काम्यायै नमः । कमनीयार्थकामदायै नमः । नन्दिन्यै नमः । लक्षणवत्यै नमः । वसिष्ठ ालयदेवतायै नमः । गोलोकदेव्यै नमः । ४००

लोकश्रियै नमः । गोलोकपरिपालिकायै नमः । हविर्धान्यै नमः । देवमात्रे नमः । वृन्दारकवरानुयुजे नमः । रुद्रपत्न्यै नमः । भद्रमात्रे नमः । सुधाधारायै नमः । अम्बुविक्षतये नमः । दक्षिणायै नमः । यज्ञसंमूर्तये नमः । सुबालायै नमः । धीरनन्दिन्यै नमः । क्षीरपूर्णायै नमः । अर्णवगतये नमः । सुधायोनये नमः । सुलोचनायै नमः । रामानुगायै नमः । सुसेव्यायै नमः । सुगन्धालयवासगायै नमः । ४२०

सुचारित्रायै नमः । सुत्रिपुरायै नमः । सुस्तन्यै नमः । स्तनवत्सलायै नमः । रजस्वलायै नमः । रजोयुक्तायै नमः । रञ्जिकायै नमः । रङ्गमालिकायै नमः । रक्तप्रियायै नमः । सुरक्तायै नमः । रतिरङ्गस्वरूपिण्यै नमः । रजः शुक्रांबिकायै नमः । निष्ठायै नमः । रतिनिष्ठायै नमः । रतिस्पृहायै नमः । हावभावायै नमः । कामकेलिसर्वस्वायै नमः । सुरजीविकायै नमः । स्वयंभूकुसुमानन्दायै नमः । स्वयंभूकुसुमप्रियायै नमः । ४४०

स्वयंभूप्रीति सन्तुष्टायै नमः । स्वयंभूनिन्दकान्तकृते नमः । स्वयंभूस्थायै नमः । शक्तिपुत्र्यै नमः । रतिसर्वस्वपीठिकायै नमः । अत्यन्तसभ्भिकायै नमः। दूत्यै नमः । विदग्धायै नमः । प्रीतिपूजितायै नमः । कुब्जिकायै नमः । यन्त्रनिलयायै नमः । योगपीठाधिवासिन्यै नमः । सुलक्षणायै नमः । रसरूपायै नमः । सर्वलक्षणलक्षितायै नमः । नानालङ्कारसुभगायै नमः । पञ्चबाणसमर्चितायै नमः । ऊर्ध्वत्रिकोणनिलयायै नमः । बालायै नमः । कामेश्वर्यै नमः । ४६०

गणाध्यक्षायै नमः । कुलाध्यक्षायै नमः । लक्ष्म्यै नमः । सरस्वत्यै नमः। । वसन्तसमयप्रीतायै नमः । प्रीत्यै नमः ।

कुचभरानतायै नमः । कलाधरमुखायै नमः । अमूर्धायै नमः । पादवृद्धये नमः । कलावत्यै नमः । पुष्पप्रियायै नमः । धृत्यै नमः । रतिकण्ठ्यै नमः । मनोरमायै नमः । मदनोन्मादिन्यै नमः । मोहिन्यै नमः । पार्वण्यै कलायै नमः । शोषिण्यै नमः। वशिन्यै नमः । ४८०

राजिन्यै नमः । अत्यन्तसुभगायै नमः । भगायै नमः । पूषायै (ष्णे) नमः । वशायै नमः । सुमनायै (नसे) नमः । रत्यै नमः । प्रीत्यै नमः । धृत्यै नमः । ऋद्ध्यै नमः । सौम्यायै नमः । मरीच्यंशुमालायै नमः । प्रत्यङ्गिरायै नमः । शशिन्यै नमः । सुच्छायायै नमः । संपूर्णमण्डलोदयायै नमः । तुष्टायै नमः । अमृतपूर्णायै नमः । भगयन्त्रनिवासिन्यै नमः । लिङ्गयन्त्रालयायै नमः । ५००

शंभुरूपायै नमः । संयोगयोगिन्यै नमः । द्राविण्यै नमः । बीजरूपायै नमः । अक्षुब्धायै नमः । साधकप्रियायै नमः । राजबीजमय्यै नमः । राज्यसुखदायै नमः । वाञ्छितप्रदायै नमः । रजस्संवीर्यशक्तये नमः । शुक्रविदे नमः । शिवरूपिण्यै नमः । सर्वसारायै नमः । सारमयायै नमः । शिवशक्तिमय्यै नमः । प्रभायै नमः । संयोगानन्दनिलयायै नमः । संयोगप्रीतिमातृकायै नमः। संयोगकुसुमानन्दायै नमः । संयोगायै नमः । ५२०

योगवर्धिन्यै नमः । संयोगसुखदावस्थायै नमः । चिदानन्दैकसेवितायै नमः । अर्घ्यपूजकसंपत्तये नमः । अर्घ्यद्रव्यस्वरूपिण्यै नमः । सामरस्यायै नमः । परायै नमः । प्रीतायै नमः । प्रियसङ्गमरूपिण्यै नमः । ज्ञानदूत्यै नमः । ज्ञानगम्यायै नमः । ज्ञानयोनये नमः । शिवालयायै नमः । चित्कलायै नमः । ज्ञानसकलायै नमः । सकुलायै नमः ।

सकुलात्मिकायै नमः । कलाचतुष्टय्यै नमः । पद्मिन्यै नमः । अतिसूक्ष्मायै नमः । ५४०

परात्मिकायै नमः । हंसकेलिस्थल्यै नमः । छायायै नमः । हंसद्वयविकासिन्यै नमः । विरागतायै नमः । मोक्षकलायै नमः । परमात्मकलावत्यै नमः । विद्याकलायै नमः । अन्तरात्मस्थायै नमः । चतुष्टयकलावत्यै नमः । विद्यासन्तोषिंण्यै नमः । तृप्तये नमः । परब्रह्मप्रकाशिकायै नमः । परमात्मपरायै नमः । वस्तुलीन शक्तिचतुष्टय्यै नमः। शान्तये नमः । बोधकलायै नमः । अवाप्तये नमः । परज्ञानात्मिकायै कलायै नमः । पश्यन्त्यै नमः । ५६०

परमात्मस्थायै नमः । अन्तरात्मकलाकुलायै नमः । मध्यमायै नमः । वैखर्यै नमः । आत्मकलानन्दायै नमः । कलावत्यै नमः । तारिण्यै नमः । तरण्यै नमः । तारायै नमः । शिवलिङ्गालयायै नमः । आत्मविदे नमः । परस्परशुभाचारायै नमः । ब्रह्मानन्दविनोदिन्यै नमः । रसालसायै नमः । दूतरासायै नमः । सार्थायै नमः । सार्थप्रियायै नमः । उमायै नमः । जात्यादिरहितायै नमः । योगियोगिन्यै नमः । ५८०

आनन्दवर्धिन्यै नमः[1] । वीरभावप्रदायै नमः । दिव्यायै नमः । वीरसुवे नमः । वीरभावदायै नमः । पशुत्वाभिवीरगतये नमः । वीरसङ्गमहोदयायै नमः । मूर्धाभिषिक्तायै नमः । राजश्रियै नमः । क्षत्रियायै नमः । उत्तममातृकायै नमः । शस्त्रास्त्रकुशलायै नमः । शोभायै नमः । रसस्थायै नमः । युद्धजीविकायै नमः । विजयायै नमः । योगिन्यै नमः । यात्रायै नमः । परसैन्यविमर्दिन्यै नमः । पूर्णायै नमः । ६००

---

1. कान्तायै, शान्तायै, दान्तगत्यै, वेदाद्युद्दामपद्धत्यै इत्याधिकम्।

वित्तैषिण्यै नमः । वित्तायै नमः । वित्तसञ्चयशालिन्यै नमः । भाण्ड ागारस्थितायै नमः । रत्नायै नमः । रत्नश्रेण्यधिवासिन्यै नमः । महिष्यै नमः । राजभोग्यायै नमः । गणिकायै नमः । गणभोगभृते नमः । करिण्यै नमः । बड वायै नमः । योग्यायै नमः । मल्लसेनायै नमः । पदातिगायै नमः । सैन्यश्रेण्यै नमः । शौर्यरतायै नमः । पताकायै नमः । ध्वजवासिन्यै नमः । सुच्छ त्रायै नमः । ६२०

अंबिकायै नमः । अंबायै नमः । प्रजापालनसद्व्रतये नमः । सुरभ्यै नमः । पूजकाचारायै नमः । राजकार्यपरायणायै नमः । ब्रह्मक्षत्रमय्यै नमः । सोमसूर्यान्तर्यामिन्यै नमः । स्थित्यै नमः । पौरोहित्यप्रियायै नमः । साध्व्यै नमः । ब्रह्माण्यै नमः । यज्ञसन्तत्यै नमः । सोमपानरतायै नमः । प्रीतायै नमः। जनाढ्यायै नमः । तपनायै नमः । क्षमायै नमः । प्रतिग्रहपरायै नमः । दात्र्यै नमः । ६४०

सृष्ट यै नमः । जात्यै नमः । सतांगतये नमः । गायत्र्यै नमः । वेदलभ्यायै नमः । दीक्षायै नमः । सन्ध्यापरायणायै नमः । रत्नसद्दीधितये नमः । विश्ववासनायै नमः । विश्वजीविकायै नमः । कृषिवाणिज्यभूत्यै नमः । वृद्धये नमः । धिये नमः । कुसीदिकायै नमः । कुलाधारायै नमः। सुप्रसारायै नमः । मनोन्मन्यै नमः । परायणायै नमः । शूद्रायै नमः । विप्रगतये ६६०

कर्मकर्यै नमः । कौतुकपूजितायै नमः । नानाविचारचतुरायै नमः । बालायै नमः । प्रौढ यै नमः । कलामय्यै नमः । सुकर्णधारायै नमः । नावे नमः । पारायै नमः । सर्वाशायै नमः । दुर्गमोचन्यै नमः । दुर्गायै नमः । विन्ध्यवनस्थायै नमः । कन्दर्पनयपूरण्यै

नमः । भूभारशमन्यै नमः । कृष्णायै नमः । रक्षाराध्यायै नमः । रसोल्लसायै नमः । त्रिविधोत्पातशमन्यै नमः । समग्रसुखशेवधये नमः । ६८०

पञ्चावयववाक्यश्रिये नमः । प्रपञ्चोद्यानचन्द्रिकायै नमः । सिद्धसन्दोहसुखितायै नमः । योगिनीबृन्दवन्दितायै नमः । नित्याषोड शरूपायै नमः । कामेश्यै नमः । भगमालिन्यै नमः । नित्यक्लिन्नायै नमः । भी(भे)रुण्ड ायै नमः । वह्निमण्ड लवासिन्यै नमः । महाविद्येश्वरीनित्यायै नमः । शिवदूतीतिविश्रुतायै नमः । त्वरिताप्रथितायै नमः । ख्यातायै नमः । विख्यातायै कुलसुन्दर्यै नमः । नित्यायै नमः । नीलपताकायै नमः । विजयायै नमः । सर्वमङ्गलायै नमः । ज्वालामालायै नमः । ७००

विचित्रायै नमः । महात्रिपुरसुन्दर्यै नमः । गुरुबृन्दायै नमः । परगुरवे नमः । प्रकाशानन्दनाथिन्यै नमः । शिवानन्दानाथरूपायै नमः । शक्त्यानन्दस्वरूपिण्यै नमः । देव्यानन्दानाथमय्यै नमः । कौलेशानन्दनाथिन्यै नमः । दिव्यौघगुरुरूपायै नमः । समयानन्द-नाथिन्यै नमः । शुक्लदेव्यानन्दनाथायै नमः । कुलेशानन्दनाथिन्यै नमः[1] । क्लिन्नाङ्गानन्दरूपायै नमः । समयानन्दनाथिन्यै नमः । वेदानन्दनाथमय्यै नमः । सहजानन्दनाथिन्यै नमः । सिद्धौघगुरु-रूपायै नमः । अपरागुरुरूपिण्यै नमः । गगनानन्दनाथायै नमः । ७२०

विश्वानन्दस्वनाथिन्यै नमः । विमलानन्दनाथायै नमः । मदनानन्दनाथिन्यै नमः । भुवनाद्यायै नमः । लीलाद्यायै नमः । नन्दनानन्दनाथिन्यै नमः । स्वात्मानन्दानन्दरूपायै नमः ।

१. कामेश्वर्यानन्दनाथमय्यै, श्रीगुरुरूपिण्यै इत्यधिकम् ।

प्रियाद्यानन्दनाथिन्यै नमः । मानवौघगुरुश्रेष्ठायै नमः । परमेष्ठिगुरुप्रभायै नमः। परगुह्यायै नमः । गुरुशक्त्यै नमः । स्वगुरुकीर्तनप्रियायै नमः । त्रैलोक्यमोहनख्यातायै नमः । सर्वाशापरिपूरकायै नमः । सर्वसंक्षोभिण्यै नमः। पूर्वाम्नायप्रथितवैभवायै नमः । शिवायै शक्त्यै नमः । शिवशक्त्यै नमः । शिवचक्रत्रयालयायै नमः । ७४०

सर्वसौभाग्यदाख्यायै नमः । सर्वार्थसाधिकाह्वयायै नमः । सर्वरक्षाकराख्यायै नमः । दक्षिणाम्नायदेवतायै नमः । मध्यार्कचक्रनिलयायै नमः । पश्चिमाम्नायदेवतायै नमः । नवचक्रकृतावासायै नमः । कौबेराम्नाय देवतायै नमः । कुबेरपूज्यायै नमः । कुलजायै नमः । कुलाम्नाय प्रवर्तिन्यै नमः। बिन्दुचक्रकृतावासायै नमः । मध्यसिंहासनेश्वर्यै नमः । श्रीविद्यायै नमः । महालक्ष्म्यै नमः । लक्ष्म्यै नमः । शक्तित्रयात्मिकायै नमः । सर्वसाम्राज्यलक्ष्म्यै नमः । पञ्चलक्ष्मीतिविश्रुतायै नमः । श्रीविद्यायै नमः । ७६०

परज्योतिषे नमः । परनिष्कलशांभव्यै नमः । मातृकायै नमः । पञ्चकोश्यै नमः । श्रीविद्यायै नमः । त्वरितायै नमः । पारिजातेश्वर्यै नमः । त्रिकूटायै नमः । पञ्चबाणगायै नमः । पञ्चकल्पलतायै नमः । पञ्चविद्यायै नमः । अमृतपीठिकायै नमः । सुधासुवे नमः । रमणायै नमः । ईशानायै नमः । अन्नपूर्णायै नमः । कामदुहे नमः । श्रीविद्यायै नमः । सिद्धलक्ष्म्यै नमः । मातङ्ग्यै नमः । ७८०

भुवनेश्वर्यै नमः । वाराह्यै नमः । पञ्चरत्नानामीश्वर्यै नमः । मातृवर्णगायै नमः । पराज्योतिषे नमः । कोशरूपायै नमः ।

ऐन्दवीकलया युतायै नमः । परितः स्वामिन्यै नमः । शक्तिदर्शनायै नमः । रविबिन्दुयुजे नमः । ब्रह्मदर्शनरूपायै नमः । शिवदर्शन-रूपिण्यै नमः । विष्णुदर्शनरूपायै नमः । सृष्टि चक्रनिवासिन्यै नमः । सौरदर्शनरूपायै नमः । स्थितिचक्रकृतालयायै नमः । बौद्धदर्शनरूपायै नमः । महात्रिपुरसुन्दर्यै नमः । तत्वमुद्रा-स्वरूपायै नमः । प्रसन्नायै नमः । ८००

ज्ञानमुद्रिकायै नमः । सर्वोपचारसन्तुष्ट ायै नमः । हृन्मय्यै नमः । शीर्षदेवतायै नमः । शिखास्थितायै नमः । ब्रह्ममय्यै नमः । नेत्रत्रयविलासिन्यै नमः । अस्त्रस्थायै नमः । चतुरस्रायै नमः । द्वारकायै नमः । द्वारवासिन्यै नमः । अणिमायै नमः । पश्चिमस्थायै नमः । लघिमायै नमः । उत्तरदेवतायै नमः । पूर्वस्थायै नमः । महिमायै नमः । ईशित्वायै नमः । दक्षिणद्वारदेवतायै नमः । वशित्वायै नमः । ८२०

वायुकोणस्थायै नमः। प्राकाम्यायै नमः । ईशानदेवतायै नमः । अग्निकोणास्थितायै नमः । भुक्तये नमः । इच्छ ायै नमः । नैर्ऋतवासिन्यै नमः । प्राप्तिसिद्धये नमः । अवस्थायै नमः । प्राकाम्यार्धविलासिन्यै नमः । ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः । वाराह्यै नमः। ऐन्द्र्यै नमः । चामुण्ड ायै नमः । महालक्ष्म्यै नमः । दिशांगतये नमः । क्षोभिण्यै नमः । ८४०

द्राविणीमुद्रायै नमः । आकर्षायै नमः । उन्मादन कारिण्यै नमः । महाङ्कुशायै नमः । खेचर्यै नमः । बीजाख्यायै नमः । योनिमुद्रिकायै नमः । सर्वाशापूरचक्रस्थायै नमः । कार्यसिद्धिकर्यै नमः । कामाकर्षणिकाशक्त्यै नमः। बुद्ध्याकर्षणरूपिण्यै नमः

अहङ्काराकर्षिण्यै नमः। शब्दाकर्षण रूपिण्यै नमः। स्पर्शाकर्षण-रूपायै नमः। रूपाकर्षणरूपिण्यै नमः। रसाकर्षणरूपायै नमः। गन्धाकर्षणरूपिण्यै नमः। चित्ताकर्षणरूपायै नमः। धैर्याकर्षणरूपिण्यै नमः। स्मृत्याकर्षणरूपायै नमः। ८६०

बीजाकर्षणरूपिण्यै नमः। अमृताकर्षिण्यै नमः। नामाकर्षणरूपिण्यै नमः। शरीराकर्षिणीदेव्यै नमः। आत्माकर्षणरूपिण्यै नमः। षोड शस्वररूपायै नमः। स्रवत्पीयूषमन्दिरायै नमः। त्रिपुरेश्यै नमः। सिद्धरूपायै नमः। कलादलनिवासिन्यै नमः। सर्वसंक्षोभचक्रेश्यै नमः। शक्तये गुप्ततराभिधायै नमः। अनङ्गकुसुमाशक्तये नमः। अनङ्गकटि-मेखलायै नमः। अनङ्गमदनायै नमः। अनङ्गमदनातुररूपिण्यै नमः। अनङ्गरेखायै नमः। अनङ्गवेगायै नमः। अनङ्गाङ्कुशाभिधायै नमः। अनङ्गमालिन्यै शक्तये नमः। ८८०

अष्ट वर्गदिगन्वितायै नमः। वसुपत्रकृतावासायै नमः। श्रीमत्त्रिपुरसुन्दर्यै नमः। सर्वसाम्राज्यसुखदायै नमः। सर्वसौभाग्यदेश्वर्यै नमः। संप्रदायेश्वर्यै नमः। सर्वसंक्षोभणकर्यै नमः। सर्वविद्राविण्यै नमः। सर्वाकर्षणाटोप कारिण्यै नमः। सर्वाह्लादनशक्तये नमः। सर्वजृंभणकारिण्यै नमः। सर्वस्तंभनशक्तये नमः। सर्वसंमोहिन्यै नमः। सर्ववश्यकर्यै शक्त्यै नमः। सर्वसर्वानुरञ्जन्यै नमः। सर्वोन्मादनशक्तये नमः। सर्वार्थसिद्धिकारिण्यै नमः। सर्वसंपत्तिदायै शक्तये नमः। सर्वमन्त्रमय्यै नमः। सर्वद्वन्द्वक्षयकर्यै नमः। ९००

त्रिपुरवासिन्यै सिद्ध्यै नमः। सर्वार्थसाधकेश्यै नमः। सर्वकार्यार्थसिद्धिदायै नमः। चतुर्दशारचक्रेश्यै नमः।

कलायोगसमन्वितायै नमः । सर्वसिद्धिप्रदादेव्यै नमः । सर्वसंपत्प्रदायै नमः । सर्वप्रियङ्कर्यै शक्तये नमः । सर्वमङ्गल-कारिण्यै नमः । सर्वकामप्रपूर्णायै नमः । सर्वदुःखप्रमोचिन्यै नमः। सर्वमृत्युप्रशमन्यै नमः । सर्वविघ्नविनाशिन्यै नमः । सर्वाङ्गसुन्दरीदेव्यै नमः । सर्वसौभाग्यदायिन्यै नमः । त्रिपुरेश्यै नमः । सर्वसिद्धिप्रदायै नमः । दशकोणगायै नमः । सर्वरक्षाकरेश्यै नमः । निगर्भायै योगिन्यै नमः । ९२०

सर्वज्ञायै नमः । सर्वशक्तये नमः । सर्वैश्वर्यप्रदायै नमः । सर्वज्ञानमय्यै देव्यै नमः । सर्वव्याधिविनाशिन्यै नमः । सर्वाधारस्वरूपायै नमः । सर्वपापहरायै नमः । सर्वानन्दमयीदेव्यै नमः । सर्वरक्षास्वरूपिण्यै नमः । महिमाशक्तिदेव्यै नमः । देव्यै सर्वसमृद्धिदायै नमः । अन्तर्दशारचक्रेश्यै नमः। देव्यै त्रिपुरमा लिन्यै नमः । सर्वरोगहरेश्यै नमः । रहस्यायै योगिन्यै नमः । वाग्देव्यै नमः । वशिन्यै नमः । देव्यै कामेश्वर्यै नमः । मोदिन्यै नमः । विमलायै नमः । ९४०

अरुणायै नमः । जयिन्यै नमः । सर्वेश्वर्यै नमः । कौलिन्यै नमः । अष्ट ारसर्वसिद्धिदायै नमः । सर्वकामप्रदेश्यै नमः । परापररहस्यविदे नमः । त्रिकोणचतुरश्रस्थायै नमः । सर्वैश्वर्यायै नमः । आयुधात्मिकायै नमः । कामेश्व रीबाणरूपायै नमः । कामेशीचापरूपिण्यै नमः । कामेशीपाशरूपायै नमः । कामेश्यङ्कुशरूपिण्यै नमः । कामेश्वर्यै नमः । इन्द्रशक्तये नमः । अग्निचक्रकृतालयायै नमः । कामगिर्यधिदेव्यै नमः । त्रिकोणस्थायै नमः । अग्रकोणगायै नमः । ९६०

दक्षकोणेश्वर्यै नमः । विष्णुशक्तये नमः । जालन्धराश्रयायै

नमः। सूर्यचक्रालयायै नमः। रुद्रशक्तये नमः। वामाङ्गकोणगायै नमः। सोमचक्रायै नमः। ब्रह्मशक्तये नमः। पूर्णगिर्यनुरागिण्यै नमः। श्रीमत्त्रिकोणभुवनायै नमः। त्रिपुरात्मने नमः। महेश्वर्यै नमः। सर्वानन्दमयेश्यै नमः। बिन्दुगायै नमः। अतिरहस्यभृते नमः। परब्रह्मस्वरूपायै नमः। महात्रिपुरसुन्दर्यै नमः। सर्वचक्रान्तरस्थायै नमः। समस्त चक्रनायिकायै नमः। सर्वचक्रेश्वर्यै नमः। ९८०

सर्वमन्त्राणामीश्वर्यै नमः। सर्वविद्येश्वर्यै नमः। सर्ववागीश्वर्यै नमः। सर्वयोगीश्वर्यै नमः। पीठेश्वर्यै नमः। अखिलेश्वर्यै नमः। सर्वकामेश्वर्यै नमः। सर्वतत्त्वेश्वर्यै नमः। आगमेश्वर्यै नमः। शक्त्यै नमः। शक्तिधृषे नमः। उल्लासायै नमः। निर्द्वन्द्वायै नमः। द्वैतगर्भिण्यै नमः। निष्प्रपञ्चायै नमः। महामायायै नमः। सप्रपञ्चायै नमः। सुवासिन्यै नमः। सर्वविश्वोत्पत्तिधात्र्यै नमः। परमानन्दसुन्दर्यै नमः। १०००

* * *

# श्रीबाला सहस्रनामस्तोत्रम् -३

शौनक उवाच

कैलासशिखरे रम्ये नानापुष्पोपशोभिते ।
कल्पपादपमध्यस्थे गन्धर्वगणसेविते ।। १ ।।

मणिमण्डप मध्यस्थे नानारत्नोपशोभिते ।
तं कदाचित् सुखासीनं भगवन्तं जगद्गुरुम् ।। २ ।।

कपालखट् वाङ्गधरं चन्द्रार्ध कृतशेखरम् ।
त्रिशूलड मरुधरं महावृषभवाहनम् ।। ३ ।।

जट ाजूट धरं देवं वासुकिकण्ठ भूषणम् ।
विभूतिभूषणं देवं नीलकण्ठं त्रिलोचनम् ।। ४ ।।

द्वीपिच्चर्मपरीधानं शुद्धस्फ टि कसन्निभम् ।
सहस्रादित्यसङ्काशं गिरिजार्धाङ्गभूषणम् ।। ५ ।।

प्रणम्य शिरसा नाथं कारणं विश्वरूपिणम् ।
कृताञ्जलिपुट ो भूत्वा प्राह तं शिखिवाहनः ।। ६ ।।

कार्तिकेय उवाच

देवदेव महादेव ! सृष्टि स्थित्यन्तकारक ! ।
त्वं गतिः सर्वदेवानां त्वं गतिः सर्वदेहिनाम् ।। ७ ।।
त्वं गतिः सर्वदेवानां सर्वेषां त्वं गतिर्विभो ! ।
त्वमेव जगदाधारस्त्वमेव विश्वकारणम् ।। ८ ।।

त्वमेव पूज्यः सर्वेषां त्वदन्यो नास्ति मे गतिः ।
किं गुह्यं परमं लोके किमेकं सर्वसिद्धिदम् ।। ९ ।।

किमेकं परमं सृष्टिः किं भौमैश्वर्यमोक्षदम्।
विना तीर्थेन तपसा विना वेदैर्विना मखैः ॥ १० ॥

विना जाप्येन ध्यानेन कथं सिद्धिमवाप्नुयात्।
कस्मादुत्पद्यते सृष्टिः कस्मिंश्च विलयो भवेत्॥ ११ ॥

कस्मादुत्तीर्यते देव ! संसारार्णवसङ्कटात्।
तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ! ॥ १२ ॥

श्रीमहादेव उवाच

साधु साधु त्वया पृष्टोऽस्म्यहं पार्वतीनन्दन ! ।
अस्ति गुह्यतमं पुत्र ! कथयिष्याम्यसंशयम्॥ १३ ॥

सत्त्वं रजस्तमश्चैव ब्रह्मविष्णुशिवादयः ।
ये चान्ये बहवो भूताः सर्वे प्रकृतिसम्भवाः ॥ १४ ॥

सैव देवी पराशक्तिर्महात्रिपुरसुन्दरी ।
सैव संहरते विश्वं जगदेतच्चराचरम्॥ १५ ॥

आधारं सर्वभूतानां सैव रोगार्तिहारिणी ।
इच्छाशक्तिः क्रियारूपा ब्रह्मविष्णुशिवात्मिका ॥ १६ ॥

त्रिधा शक्तिस्वरूपेण सृष्टिस्थितिविनाशिनी ।
सृजति ब्रह्मरूपेण विष्णुरूपेण रक्षति ॥ १७ ॥

हरते रुद्ररूपेण जगदेतच्चराचरम्।
यस्य योनौ जगत् सर्वमद्यापि वर्ततेऽखिलम्॥ १८ ॥

यस्यां प्रलीयते चान्ते यस्यां च जायते पुनः ।
यां समाराध्य त्रैलोक्ये सम्प्राप्तं पदमुत्तमम्।
तस्याः नामसहस्रं ते कथयामि शृणुष्व तत्॥ १९

ॐ अस्य श्रीबालासहस्रनामस्तोत्रमन्त्रस्य, भगवान् दक्षिणामूर्तिर्वामदेवः ऋषिः, गायत्री छन्दः, प्रकट गुप्त गुप्ततर संप्रदाय कुल कौलोत्तीर्णानिगर्भ रहस्यातिरहस्य परापररहस्या चिन्त्य वर्तिनी बाला देवता। आं बीजं, ह्रीं शक्तिः, क्लीं कीलकम्, श्री बालाप्रीत्यर्थे पारायणे विनियोगः

ध्यानम्

आधारे तरुणार्कबिम्बसदृशं हेमप्रभं वाग्भवम्
बीजं मान्मथमिन्द्रगोपसदृशं हृत्पङ्कजे संस्थितम्।
चक्रं भालमयं शशाङ्करुचिरं बीजं तु तार्तीयकम्
ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सूक्ष्मां गतिम्॥

कल्याणी कमला काली कराली कामरूपिणी।
कामाक्षा कामदा काम्या कामना कामचारिणी॥ २२॥

कौमारी करुणामूर्तिः कलिकल्मषनाशिनी।
कात्यायनी कलाधारा कौमुदी कमलप्रिया॥ २३॥

कीर्तिदा बुद्धिदा मेधा नीतिज्ञा नीतिवत्सला।
माहेश्वरी महामाया महातेजा महेश्वरी॥ २४॥

कालरात्रिर्महारात्रिः कालिन्दी कल्परूपिणी।
महाजिह्वा महालोला महादंष्ट्रा महाभुजा॥ २५॥

महामोहान्धकारघ्नी महामोक्षप्रदायिनी।
महादारिद्र्यराशिघ्नी महाशत्रुविमर्दिनी॥ २६॥

महाशक्तिर्महाज्योतिर्महासुरविमर्दिनी।
महाकाया महाबीजा महापातकनाशिनी॥ २७॥

महामखा मन्त्रमयी मणिपुरनिवासिनी।
मानसी मानदा मान्या मनश्चक्षुरगोचरा॥ २८॥

गणमाता च गायत्री गणगन्धर्वसेविता।
गिरिजा गिरिशा साध्वी गिरिसू र्गिरिसम्भवा॥ २९॥

चण्डे श्वरी चन्द्ररूपा प्रचण्ड ा चण्ड मालिनी।
चर्चिका चर्चिताकारा चण्डि का चारुरूपिणी॥ ३०॥

यज्ञेश्वरी यज्ञरूपा जपयज्ञपरायणा।
यज्ञमाता यज्ञगोप्त्री यज्ञेशी यज्ञसम्भवा॥ ३१॥

यज्ञसिद्धिः क्रियासिद्धिर्यज्ञाङ्गी यज्ञरक्षका।
यज्ञप्रिया यज्ञरूपा याज्ञी यज्ञकृपालया॥ ३२॥

जालन्धरी जगन्माता जातवेदा जगत्प्रिया।
जितेन्द्रिया जितक्रोधा जननी जन्मदायिनी॥ ३३॥

गङ्गा गोदावरी गौरी गौतमी च शतह्रदा।
घुर्घुरा वेदगर्भा च रेविका करसम्भवा॥ ३४॥

सिन्धुर्मन्दाकिनी क्षिप्रा यमुना च सरस्वती।
चन्द्रभागा विपाशा च गण्ड की विन्ध्यवासिनी॥ ३५॥

नर्मदा कह्नकावेरी वेत्रवत्या च कौशिकी।
महोनतनया चैव अहल्या चम्पकावती॥ ३६॥

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
द्वारावती च तीर्थेशी महाकिल्विषनाशिनी॥ ३७॥

पद्मिनी पद्ममध्यस्था पद्मकिञ्जल्कवासिनी।
पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसम्भवा॥ ३८॥

ह्रींकारी कुण्ड ली धात्री हृत्पद्मस्था सुलोचना।
श्रींकारी भूषणा लक्ष्मीः क्लींकारी क्लेशनाशिनी।। ३९।।

हरिप्रिया हरेर्मूर्तिर्हरिनेत्रकृतालया।
हरिवक्त्रोद्भवा शान्ता हरिवक्षःस्थितालया।। ४०।।

वैष्णवी विष्णुरूपा च विष्णुमातृस्वरूपिणी।
विष्णुमाया विशालाक्षी विशालनयनोज्ज्वला।। ४१।।

विश्वेश्वरी च विश्वात्मा विश्वेशी विश्वरूपिणी।
विश्वेश्वरी शिवाधारा शिवनाथा शिवप्रिया।। ४२।।

शिवमाता शिवाक्षी च शिवदा शिवरूपिणी।
भवेश्वरी भवाराध्या भवेशी भवनायिका।। ४३।।

भवमाता भवागम्या भवकण्ट कनाशिनी।
भवप्रिया भवानन्दा भवानी भवमोचिनी।। ४४।।

गीतिर्वरेण्या सावित्री ब्रह्माणी ब्रह्मरूपिणी।
ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्राह्मणी ब्रह्मवादिनी।। ४५।।

दुर्गस्था दुर्गरूपा च दुर्गा दुर्गार्तिनाशिनी।
त्रयीदा ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मवादिनी।। ४६।।

त्वक्स्था तथा च त्वग्रूपा त्वग्गा त्वगार्तिहारिणी।
स्वगमा निर्गमा दात्री दाया दोग्ध्री दुरापहा।। ४७।।

दूरघ्नी च दुराराध्या दूरदुष्कृतनाशिनी।
पञ्चस्था पञ्चमी पूर्णा पूर्णापीठ निवासिनी।। ४८।।

सत्त्वस्था सत्त्वरूपा च सत्त्वदा सत्त्वसम्भवा।
रजःस्था च रजोरूपा रजोगुणसमुद्भवा।। ४९।।

तामसी च तमोरूपा तामसी तमसः प्रिया।
तमोगुणसमुद्भूता सात्त्विकी राजसी तमी ॥ ५० ॥

कला काष्ठा निमेषा च स्वकृता तदनन्तरा।
अर्धमासा च मासा च सम्वत्सरस्वरूपिणी ॥ ५१ ॥

युगस्था युगरूपा च कल्पस्था कल्परूपिणी।
नानारत्नविचित्राङ्गी नानाभरणमण्डिता ॥ ५२ ॥

विश्वात्मिका विश्वमाता विश्वपाशा विधायिनी।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ॥ ५३ ॥

जपाकुसुमसङ्काशा दाडिमीकुसुमोपमा।
चतुरङ्गा चतुर्बाहुश्चतुरा चारुहासिनी ॥ ५४ ॥

सर्वेशी सर्वदा सर्वा सर्वज्ञा सर्वदायिनी।
सर्वेश्वरी सर्वविद्या शर्वाणी सर्वमङ्गला ॥ ५५ ॥

नलिनी नन्दिनी नन्दा आनन्दानन्दवर्धिनी।
व्यापिनी सर्वभूतेषु भवभारविनाशिनी ॥ ५६ ॥

कुलीना कुलमध्यस्था कुलधर्मोपदेशिनी।
सर्वशृङ्गारवेशाढ्या पाशांकुशकरोद्यता ॥ ५७ ॥

सूर्यकोटि सहस्राभा चन्द्रकोटि निभानना।
गणेशकोटि लावण्या विष्णुकोट्यरिमर्दिनी ॥ ५८ ॥

दावाग्निकोटि ज्वलिनी रुद्रकोट्युग्ररूपिणी
समुद्रकोटि गम्भीरा वायुकोटि महाबला ॥ ५९ ॥

आकाशकोटि विस्तारा यमकोटि भयङ्करा।
मेरुकोटि समुंच्छ्रा या गुणकोटि समृद्धिदा ॥ ६० ॥

आधारशक्तिररुणा लक्ष्मीश्श्रीपुरभैरवी [1]।
त्रिकोणमध्यनिलया षट्कोणपुरवासिनी ।। १२

नवकोणपुरावासा बिन्दुस्थलसमन्विता [2]।
अघोरामन्त्रितपदा भामिनी भवरूपिणी [3] ।। १३

एषा संकर्षिणी धात्री चोमा कात्यायनी शिवा।
सुलभा दुर्लभा शास्त्री महाशास्त्री शिखण्डिनी ।। १४

नाम्नामष्टोत्तरशतं पठेन्न्याससमन्वितम्।
सर्वसिद्धिमवाप्नोति साधकोऽभीष्टमाप्नुयात् ।।

* * *

# बालाष्टोत्तरशतनामावलिः - १

ओं ऐं ह्रीं श्रीं , कल्याण्यै नमः। त्रिपुरायै नमः। बालायै नमः। मायायै नमः। त्रिपुरसुन्दर्यै नमः। सुन्दर्यै नमः। सौभाग्यवत्यै नमः। क्लींकार्यै नमः। सर्वमङ्गळायै नमः। ह्रींकार्यै [4] नमः। स्कन्दजनन्यै नमः। परायै नमः। पञ्चदशाक्षर्यै नमः। त्रिलोक्यै नमः। मोहनायै[5] नमः। अधीशायै नमः। सर्वेश्व्यै नमः। सर्वरूपिण्यै नमः। सर्वसंक्षोभिण्यै नमः। पूर्णायै नमः। २०

१. त्रिपुरभैरवी। शांभवी सच्चिदानन्दा सच्चिदानन्द रूपिणी। माङ्गल्यदायिनी मान्या सर्वमङ्गल कारिणी। योगलक्ष्मीर्भोगलक्ष्मीः राज्यलक्ष्मीस्त्रिकोणगा। सर्वसौभाग्यसम्पन्ना सर्वसंपत्तिदायिनी। इत्यधिकम्। त्रिकोणमध्यनिलया षट्कोण पुरवासिनी इत्यर्धं नास्ति।

२. बिन्दुत्रयसमन्विता।

३. अघोरेत्यारभ्य शिखण्डिनीपर्यन्तं नास्ति।

४. ऐंकार्यै,

५. मोहनाधीशायै,

नवमुद्रेश्वर्यै नमः । शिवायै नमः । अनङ्गकुसुमायै नमः । ख्यातायै नमः । अनङ्गभुवनेश्वर्यै नमः[1] । जप्यायै नमः । स्तव्यायै नमः । श्रुत्यै नमः। नित्यायै नमः । नित्यक्लिन्नायै नमः । अमृतोद्भवायै नमः । मोहिन्यै नमः । परमायै नमः । आनन्दायै नमः । कामेश्यै नमः । तरुण्यै नमः । कलायै नमः। कलावत्यै नमः । भगवत्यै नमः । पद्मरागकिरीटिन्यै नमः । ४०

सौगन्धिन्यै नमः । सरिद्वेण्यै नमः । मन्त्रिण्यै नमः । मन्त्ररूपिण्यै नमः । तत्वत्रय्यै नमः । तत्वमय्यै नमः । सिद्धायै नमः । त्रिपुरवासिन्यै नमः। श्रियै नमः । मत्यै नमः । महादेव्यै नमः । कालिन्यै [2]नमः । परदेवतायै नमः । कैवल्यरेखायै नमः । वशिन्यै नमः । सर्वेश्यै नमः । सर्वमातृकायै नमः । विष्णुस्वस्रे नमः । देवमात्रे नमः । सर्वसम्पत्प्रदायिन्यै नमः[3] । ६०

आधारायै नमः । हितपत्नीकायै नमः । स्वाधिष्ठानसमाश्रयायै नमः । आज्ञायै नमः । पद्मासनासीनायै नमः । विशुद्धस्थल-संस्थितायै नमः[4] । अष्टत्रिंशत्कलामूर्त्यै नमः । सुषुम्नायै नमः । चारुमध्यमायै नमः । योगीश्वर्यै नमः । मुनिध्येयायै नमः । परब्रह्मस्वरूपिण्यै नमः । चतुर्भुजायै नमः । चन्द्रचूडायै नमः । पुराण्यै नमः[5] । आगमरूपिण्यै नमः । ओंकारादये नमः[6] । महाविद्यायै नमः । महाप्रणवरूपिण्यै नमः ।भूतेश्वर्यै नमः । ८०

भूतमय्यै नमः । पञ्चाशद्वर्णरूपिण्यै नमः । षोढान्यासमहाभूषायै नमः। कामाक्ष्यै नमः । दशमातृकायै नमः । आधारशक्त्यै नमः ।

---

१. अनङ्गायै भुवनेश्वर्यै, २. कौलिन्यै, ३. इतः परं गैर्वाण्यै किङ्कर्यै मात्रे सुरापानानुमोदिन्यै इति नामान्यधिकानि । ४. अनाहताब्जनिलयायै मणिपूर समाश्रयायै इति नामद्वयमधिकम्, ५. पुराणागमरूपिण्यै, ६. ऐंकारादये

अरुणायै नमः । लक्ष्म्यै नमः । श्रीपुरभैरव्यै नमः[1] । त्रिकोणमध्यनिलयायै नमः । षट्कोणपुरवासिन्यै नमः । नवकोणपुरावासायै नमः । बिन्दुस्थलसमन्वितायै नमः । अघोरायै[2] नमः । मन्त्रितपदायै नमः । भामिन्यै नमः । भवरूपिण्यै नमः । एतस्यै नमः ।सङ्कर्षिण्यै नमः । धात्र्यै नमः । १००

उमायै नमः । कात्यायन्यै नमः । शिवायै नमः । सुलभायै नमः । दुर्लभायै नमः । शास्त्र्यै नमः । महाशास्त्र्यै नमः । शिखण्डिन्यै

१०८.

## श्री बालाष्टोत्तरशतनामस्तोत्रम्–२

श्रीबाला श्रीमहादेवी श्रीमत्पञ्चासनेश्वरी।
शिववामाङ्गसम्भूता शिवमानसहंसिनी।। १

त्रिस्था त्रिनेत्रा त्रिगुणा त्रिमूर्तिवशवर्तिनी।
त्रिजन्मपापसंहर्त्री त्रियम्बककुटम्बिनी।। २

बालार्ककोटिसङ्काशा नीलालकलसत्कचा।
फालस्थहेमतिलका लोलमौक्तिकनासिका।। ३

पूर्णचन्द्रानना चैव स्वर्णताटङ्कशोभिता।
हरिणीनेत्रसाकार करुणापूर्ण लोचना।। ४

---

१. इतः परं, शांभव्यै, सच्चिदानन्दायै, सच्चिदानन्दरूपिण्यै, माङ्गल्यदायिन्यै, मान्यायै, सर्वमङ्गलकारिण्यै, योगलक्ष्म्यै, भोगलक्ष्म्यै, राज्यलक्ष्म्यै, त्रिकोणगायै, सर्वसौभाग्यसम्पन्नायै, सर्वसम्पत्तिदायिन्यै इति नामान्याधिकानि,

२. अघोरायै इत्यादि शिखण्डिन्यै इत्यन्तं नामानि न सन्ति ।

दाडिमीबीजरदना बिम्बोष्ठी मन्दहासिनी।
शङ्खग्रीवा चतुर्हस्ता कुचपङ्कज कुड्मला॥ ५

ग्रैवेयाङ्गदमाङ्गल्यसूत्रशोभितकन्धरा।
वटपत्रोदरा चैव निर्मला घनमण्डिता॥ ६

मन्दावलोकिनी मध्या कुसुंभवदनोज्ज्वला।
तप्तकाञ्चनकान्त्याढ्या हेमभूषितविग्रहा॥ ७

माणिक्यमुकुरादर्श जानुद्वयविराजिता।
कामतूणीरजघना कामप्रेष्ठगतल्पगा॥ ८

रक्ताब्जपादयुगला कणन्माणिक्यनूपुरा।
वासवादिदिशानाथ पूजितांघ्रिसरोरुहा॥ ९

वराभय स्फाटिकाक्षमालापुस्तकधारिणी।
स्वर्णकङ्कणजालाभकराङ्गुष्ठविराजिता॥ १०

सर्वाभरणभूषाढ्या सर्वावयवसुन्दरी।
ऐङ्काररूपा ऐङ्कारी ऐश्वर्यफलदायिनी॥ ११

क्लीङ्काररूपा क्लीङ्कारी क्लृप्तब्रह्माण्डमण्डला।
सौःकाररूपा सौःकारी सौन्दर्यगुणसंयुता॥ १२

सचामररतीन्द्राणी सव्यदक्षिण सेविता।
बिन्दुत्रिकोणषट्कोण वृत्ताष्टदल संयुता॥ १३

सत्यादिलोकपालान्त देव्यावरण संवृता।
ओड्याणपीठनिलया ओजस्तेजः स्वरूपिणी॥ १४

अनङ्गपीठनिलया कामितार्थफलप्रदा।
जालन्धरमहापीठा जानकीनाथसोदरी॥ १५

पूर्णागिरिपीठगता पूर्णायुः सुप्रदायिनी।
मन्त्रमूर्तिर्महायोगा महावेगा महाबला॥ १६

महाबुद्धिर्महासिद्धिर्महादेवमनोहरी।
कीर्तियुक्ता कीर्तिधरा कीर्तिदा कीर्तिवैभवा॥ १७

व्याधिशैलव्यूहवज्रा यमवृक्षकुठारिका।
वरमूर्तिर्गृहावासा परमार्थस्वरूपिणी॥ १८

कृपानिधिः कृपापूरा कृतार्थफलदायिनी।
अष्टत्रिंशत्कलामूर्तिः चतुःषष्टिकलात्मिका॥ १९

चतुरङ्गबलादात्री बिन्दुनादस्वरूपिणी।
दशाब्दवयसोपेता दिविपूज्या शिवाभिधा॥ २०

आगमारण्यमायूरी आदिमध्यान्तवर्जिता।
कदम्बवनसंपन्ना सर्वदोषविनाशिनी॥ २१

सामगानप्रिया ध्येया ध्यानसिद्धाभिवन्दिता।
ज्ञानमूर्तिर्ज्ञानरूपा ज्ञानदा भयसंहरा॥ २२

तत्वज्ञाना तत्त्वरूपा तत्वमय्याश्रितावनी।
दीर्घायुर्विजयारोग्य पुत्रपौत्रप्रदायिनी॥ २३

मन्दस्मितमुखाम्भोजा मङ्गलप्रदमङ्गला।
वरदाभयमुद्राढ्या बाला त्रिपुरसुन्दरी॥ २४

बालात्रिपुरसुन्दर्या नाम्नामष्टोत्तरं शतम्।
पठनान्मननाद्ध्यानात् सर्वमङ्गलकारकम्॥ २५

* * *

# श्री बालाष्टोत्तरशतनामावलिः - २

ओं ऐं ह्रीं श्रीं श्रीबालायै नमः । श्रीमहादेव्यै नमः । श्रीमत्पञ्चासनेश्वर्यै नमः । शिववामाङ्गसम्भूतायै नमः । शिवमानसहंसिन्यै नमः । त्रिस्थायै नमः । त्रिनेत्रायै नमः । त्रिगुणायै नमः । त्रिमूर्तिवशवर्तिन्यै नमः । त्रिजन्मपापसंहर्त्र्यै नमः । त्रियम्बक कुटुम्बिन्यै नमः । बालार्ककोटिसङ्काशायै नमः । नीलालकलसत्कचायै नमः । फालस्थहेमतिलकायै नमः । लोलमौक्तिकनासिकायै नमः । पूर्णचन्द्राननायै नमः । स्वर्ण-ताटङ्कशोभितायै नमः । हरिणीनेत्र साकार करुणापूर्णलोचनायै नमः । दाडिमीबीजरद्नायै नमः । बिम्बोष्ठ्यै नमः । (२०)

मन्दहासिन्यै नमः । शङ्खग्रीवायै नमः । चतुर्हस्तायै नमः । कुचपङ्कजकुट्मलायै नमः । ग्रैवेयाङ्गदमाङ्गल्य सूत्रशोभित-कन्धरायै नमः । वटपत्रोदरायै नमः । निर्मलायै नमः । घनमण्डितायै नमः । मन्दावलोकिन्यै नमः । मध्यायै नमः । कुसुम्भवदनोज्ज्वलायै नमः । तप्तकाञ्चनकान्त्याढ्यायै नमः । हेमभूषितविग्रहायै नमः । माणिक्यमुकुरादर्शजानुद्वयविराजितायै नमः। कामतूणीरजघनायै नमः । कामप्रेष्ठगतल्पगायै नमः । रक्ताब्जपादयुगलायै नमः । क्वणन्माणिक्यनूपुरायै नमः । वासवादिदिशानाथपूजिताङ्घ्रि सरोरुहायै नमः । वराभयस्फाटि-काक्षमालापुस्तकधारिण्यै नमः । (४०)

स्वर्णकङ्कणज्वालाभकराङ्गुष्ठविराजितायै नमः । सर्वाभरणभूषाढ्यायै नमः । सर्वावयवसुन्दर्यै नमः । ऐङ्काररूपायै नमः । ऐङ्कार्यै नमः । ऐश्वर्यफलदायिन्यै नमः । क्लीङ्काररूपायै नमः । क्लीङ्कार्यै नमः । क्लृप्तब्रह्माण्डमण्डलायै नमः। सौःकाररूपायै

नमः । सौःकार्यै नमः । सौन्दर्यगुणसंयुतायै नमः । सचामर रतीन्द्राणीसव्यदक्षिण सेवितायै नमः । बिन्दुत्रिकोण षट्कोणवृत्ताष्टदल संयुतायै नमः । सत्यादिलोकपालान्त-देव्यावरणसेवितायै नमः । ओड्याणपीठनिलयायै नमः । ओजस्तेजःस्वरूपिण्यै नमः । अनङ्गपीठनिलयायै नमः । कामितार्थफलप्रदायै नमः । जालन्धरमहापीठायै नमः । (६०)

जानकीनाथसोदर्यै नमः । पूर्णागिरिपीठगतायै नमः । पूर्णायुः सुप्रदायिन्यै नमः । मन्त्रमूर्त्यै नमः । महायोगायै नमः । महावेगायै नमः । महाबलायै नमः । महाबुद्ध्यै नमः । महासिद्ध्यै नमः । महादेवमनोहर्यै नमः । कीर्तियुक्तायै नमः । कीर्तिधरायै नमः । कीर्तिदायै नमः । कीर्तिवैभवायै नमः । व्याधिशैलव्यूहवज्रायै नमः । यमवृक्षकुठारिकायै नमः । वरमूर्तिगृहावासायै नमः । परमार्थस्वरूपिण्यै नमः । कृपानिधये नमः । कृपापूरायै नमः । (८०)

कृतार्थफलदायिन्यै नमः । अष्टत्रिंशत्कलामूर्त्यै नमः । चतुःषष्टि-कलात्मिकायै नमः । चतुरङ्गबलादात्र्यै नमः । बिन्दुनाद-स्वरूपिण्यै नमः। दशाब्दवयसोपेतायै नमः । दिविपूज्यायै नमः । शिवाभिधायै नमः । आगमारण्यमायूर्यै नमः । आदिमध्यान्त-वर्जितायै नमः । कदम्बवनसंपन्नायै नमः । सर्वदोष विनाशिन्यै नमः । सामगानप्रियायै नमः । ध्येयायै नमः । ध्यानसिद्धाभिवन्दितायै नमः । ज्ञानमूर्त्यै नमः । ज्ञानरूपायै नमः । ज्ञानदायै नमः । भयसंहरायै नमः । तत्वज्ञानायै नमः ॥ (१००)

तत्वरूपायै नमः । तत्वमय्यै नमः । आश्रितावन्यै नमः । दीर्घायुर्विजयारोग्यपुत्रपौत्र प्रदायिन्यै नमः । मन्दस्मित-मुखाम्भोजायै नमः । मङ्गलप्रदमङ्गलायै नमः । वरदाभयमुद्राढ्यायै नमः । बालात्रिपुरसुन्दर्यै नमः ॥ १०८

# श्री बालाष्टोत्तरशतनामावलिः - ३

ओं ऐं ह्रीं श्रीं - अरुणरूपायै नमः । महारूपायै नमः । ज्योतीरूपायै नमः । महेश्वर्यै नमः । पार्वत्यै नमः । वररूपायै नमः । परब्रह्मस्वरूपिण्यै नमः । लक्ष्म्यै नमः । लक्ष्मीस्वरूपायै नमः । लक्षायै नमः । लक्षस्वरूपिण्यै नमः । गायत्र्यै नमः । सावित्र्यै नमः । सन्ध्यायै नमः । सरस्वत्यै नमः । श्रुत्यै नमः । वेदबीजायै नमः । ब्रह्मबीजायै नमः । विश्वबीजायै नमः । कविप्रियायै नमः । (२०)

इच्छाशक्त्यै नमः । क्रियाशक्त्यै नमः । आत्मशक्त्यै नमः । भयङ्कर्यै नमः । कालिकायै नमः । कमलायै नमः । काल्यै नमः । कङ्काल्यै नमः । कालरूपिण्यै नमः । उपस्थिति स्वरूपायै नमः । प्रलयायै नमः । लयकारिण्यै नमः । हिङ्गुलायै नमः । त्वरितायै नमः । चण्ड्यै नमः । चामुण्डायै नमः । मुण्डमालिन्यै नमः । रेणुकायै नमः । भद्रकाल्यै नमः । मातङ्ग्यै नमः । (४०)

शिवशाम्भव्यै नमः । योगिन्यै नमः । मङ्गलायै नमः । गौर्यै नमः । गिरिजायै नमः । गोमत्यै नमः । गयायै नमः । कामाक्ष्यै नमः । कामरूपायै नमः । कामिन्यै नमः । कामरूपिण्यै नमः । योगिन्यै नमः । योगरूपायै नमः । योगज्ञानायै नमः । शिवप्रियायै नमः । उमायै नमः । कात्यायन्यै नमः । चण्ड्यै नमः । अम्बिकायै नमः । त्रिपुरसुन्दर्यै नमः । (६०)

अरुणायै नमः । तरुण्यै नमः । शान्तायै नमः । सर्वसिद्ध्यै नमः । सुमङ्गलायै नमः । शिवायै नमः । सिद्धिमात्रे नमः । सिद्धिविद्यायै नमः । हरिप्रियायै नमः । पद्मावत्यै नमः । पद्मवर्णायै नमः । पद्माक्ष्यै नमः । पद्मसंभवायै नमः । धारिण्यै नमः । धरित्र्यै

नमः । धात्र्यै नमः । अगम्यायै नमः । गम्यवासिन्यै नमः । विद्यावत्यै नमः । मन्त्रशक्त्यै नमः । (८०)

मन्त्रसिद्धिपरायणायै नमः । विराजे नमः । धारिण्यै नमः । धात्र्यै नमः । वाराह्यै नमः । विश्वरूपिण्यै नमः । परायै नमः । पश्यायै नमः । अपरायै नमः । मध्यायै नमः । दिव्यनादविलासिन्यै नमः । नादाय नमः । बिन्दवे नमः । कलायै नमः । ज्योतिषे नमः । विजयायै नमः । भुवनेश्वर्यै नमः । ऐंकारिण्यै नमः । भयङ्कार्यै नमः । क्लीङ्कार्यै नमः । १००

कमलप्रियायै नमः । सौः कार्यै नमः । शिवपत्न्यै नमः । परतत्वप्रकाशिन्यै नमः । ह्रींकार्यै नमः । आदिमायायै नमः । मन्त्रमूर्त्यै नमः । परायणायै नमः । १०८

* * *

## श्री बालाष्टोत्तरशतनामस्तोत्रम्–४

अगस्त्य उवाच-

हयग्रीव दयासिन्धो भगवन्भक्तवत्सल ।
बालात्रिपुरसुन्दर्या नाम्नामष्टोत्तरं शुभम् ।।
वदस्व मे त्वं कृपया येन ज्ञानं प्रवर्तते ।। १

हयग्रीव उवाच-

शृणु सम्यक्प्रवक्ष्यामि श्रीबालाष्टोत्तरं शतम् ।
सर्वविद्यात्मकं ज्ञेयं श्रीबालाप्रीतिदायकम् ।। २

अस्य श्री बालाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य दक्षिणामूर्तिः ऋषिः । अनुष्टुप् छन्दः । बालात्रिपुर सुन्दरी देवता । ऐंबीजं, क्लीं शक्तिः, सौः कीलकं, श्रीबालाप्रीत्यर्थे नामपारायणे विनियोगः ।

मूलेन कराङ्गन्यासौ। ध्यानं-

उदञ्चद्दिनेशप्रपञ्च प्रकाशां
    उदूढेन्दुरे खामुदारां त्रिणेत्राम्।
वहन्तीं वराभीति कोशाक्षमालाः
    वहन्तीं स्फुटे हल्लके नौमि बालाम्।।[1]

*लमित्यादि पञ्च पूजाः ।*

कल्याणी त्रिपुरा बाला माया त्रिपुरसुन्दरी।
सौन्दर्यभाग्यसं युक्ता क्लींकारी सर्वमङ्गला।।[2] ३
ऐंकारी सर्वजननी[3] परा पञ्चदशाक्षरी।
त्रैलोक्य मोहनाधीशा सर्वाशा पूरवल्लभा।। ४
सर्वसंक्षोभणाधीशा सर्वसौभाग्यदायिनी।
सर्वार्थिसाधकाधीशा सर्वरक्षाकराधिपा।। ५
सर्वरोगहराधीशा सर्वसिद्धिप्रदायिका।
सर्वानन्दमयाधीशा योगिनीचक्रनायिका।। ६
भक्तानुरक्ता[4] रक्ताङ्गी शङ्करार्धशरी रिणी।
पुष्पबाणेक्षु कोदण्ड पाशाङ्कु शलसत्करा।।[5] ७
संविदानन्दलहरी[6] श्रीविद्या त्रिपुरेश्वरी।
सर्वसंक्षोभिणीपूर्व नवमुद्रेश्वरी शिवा[7]।। ८
अनङ्गकुसुमाराध्या चक्रेशी[8]भुवनेश्वरी।
गुप्ता गुप्ततरा नित्या नित्यक्लिन्ना मदद्रवा[9]।। ९

---

1. मालासृणीपुस्तकपाशहस्तां बालां भजेऽहं ललिता कुमारीम्। कुमारकामेश्वर-केलिलोलां नमामि गौरीं नववर्षदेश्याम्। 2. सुन्दरी सर्व सौभाग्यवती ह्रींकाररूपिणी। 3. स्कन्दजननी क्लींकारी परमेश्वरी। सौः कारी सर्वशक्तिश्च परा पञ्चदशाक्षरी। 4. भक्तानुरक्षा 5. पुष्पबाणेक्षवधनुः पाशांकुशलसत्करा 6. सच्चिदानन्दलहरी 7. पूर्वा चानन्तमुद्रेशी सर्वसंक्षोभिणी शिवा।
8. अनङ्गकुसुमापीडा चक्रिणी 9. नित्यक्लिन्नमदद्रवा,

मोहिनी परमानन्दा कामेशी तरुणी कला।
पद्मावती[1] भगवती पद्मरागकिरीटिनी ॥ १०
रक्तवस्त्रा रक्तभूषा रक्तगन्धानुलेपना।
सौगन्धिकमिलद्वेणी मन्त्रिणी मन्त्ररूपिणी ॥ ११
तत्त्वासना[2] तत्त्वमयी सिद्धान्तःपुरवासिनी।
श्रीमती च महादेवी कौलिनी परदेवता ॥ १२
कैवल्यरेखा वशिनी सर्वेशी सप्तमातृका[3]।
विष्णुस्वसा वेदवेद्या[4] सर्वसंपत्प्रदायिनी ॥ १३
किङ्करीभूत गीर्वाणी[5] सुधापानविनो दिनी।
आधारपीठनिलया[6] स्वाधिष्ठान समाश्रया ॥ १४
मणिपूरसमासीना चानाहतनिवासिनी।
आज्ञाचक्राब्जनिलया[7] विशुद्धिस्थलसंश्रया[8] ॥ १५
अष्टत्रिं शत्कलामूर्तिः[9] सुषुम्नाद्वारमध्यगा।
योगीश्वरमनोध्येया[10] पर ब्रह्मस्वरूपिणी ॥ १६
चतर्भुजा चन्द्रचूडा पुराणागमरूपिणी।
ओं कारी विविधाकारा पञ्चब्रह्मस्वरूपिणी ॥ १७

---

1. कलावती, 2. तत्त्वत्रया, 3. सर्वमातृका सर्वमङ्गला,
4. वेदमयी, देवमाता, 5. श्रीवाणी, 6. आधारवीथीपथिका,
7. आज्ञापद्मासनासीना,
8. विशुद्धि चक्रनिलया चाज्ञाचक्र निवासिनी,
*9.* सुषुम्नागारमध्यगा *10.* योगीश्वरमुनि ध्येया
*11.* ओंकारी विमला विद्या पञ्चप्रणवरूपिणी।

भूतेश्वरी भूतमयी पञ्चाशत्पीठरूपिणी[1] ।
षोढान्यास महाभूषा कामाक्षी दशमातृका ॥ १८

आधारवीथीपथिका[2] लक्ष्मीस्त्रिपुरभैरवी ।
रहः पूजा समालोला रहोयज्ञस्वरूपिणी ॥ १९

त्रिकोणमध्यनिलया षट्कोण पुरवासिनी ।
वसुकोण पुरावासा[3] दशारद्वयवासिनी ॥ २०

चतुर्दशार कोणस्था वसुपत्र निवासिनी ।
[4]स्वराब्जपत्र निलया वृत्तत्रयनिवासिनी ॥ २१

चतुरश्रस्वरूपा च बिन्दुस्थलमनोहरा[5]
नाम्नामष्टोत्तर शतं भवेद्देव्याः समन्त्रकम् ॥ २२

प्रत्यहं पूजयेद्बालां श्रद्धाभक्ति समन्वितः ।
अर्चये त्कुङ्कुमेनैव जातीचंपकपङ्कजैः ॥ २३

अन्यैः सुगन्धिकुसुमैः केतकीकरवीरकैः ।
योऽर्चयेत्परया भक्त्या सलभेद्वाञ्छितं फलम् ॥
भक्त्या नित्यं पठेत्सम्यक् वागीश्वरसमो भवेत् ॥ २४

---

1. पञ्चाशद्वर्णरूपिणी,

2. आधार शक्तिररुणा

3. दशारद्वन्द्व

4. स्वराब्जचक्र

5. बिन्दुस्थल निवासिनी

# बालाष्टोत्तरशतनामस्तोत्रम्-५

अम्बा माता महालक्ष्मीः सुन्दरी भुवनेश्वरी।
शिवा भवानी चिद्रूपा त्रिपुरा भवरूपिणी ॥ १

भयङ्करी भद्ररूपा भैरवी भववारिणी।
भाग्यप्रदा भावगम्या भगमण्डलमध्यगा ॥ २

मन्त्ररूपपदा नित्या पार्वती प्राणरूपिणी।
विश्वकर्त्री विश्वभोक्त्री विविधा विश्ववन्दिता ॥ ३

एकाक्षरी मृडाराध्या मृडसन्तोषकारिणी।
वेदवेद्या विशालाक्षी विमला वीरसेविता ॥ ४

विधुमण्डलमध्यस्था विधुबिम्ब समानना।
विश्वेश्वरी वियद्रूपा विश्वमाया विमोहिनी ॥ ५

चतुर्भुजा चन्द्रचूडा चन्द्रकान्तिसमप्रभा।
वरप्रदा भाग्यरूपा भक्तरक्षणदीक्षिता ॥ ६

भक्तिदा शुभदा शुभ्रा सूक्ष्मा सुरगणार्चिता।
गानप्रिया गानलोला देवगानसमन्विता ॥ ७

सूत्रस्वरूपा सूत्रार्था सुरबृन्दसुखप्रदा।
योगप्रिया योगवेद्या योगिहृत्पद्मवासिनी ॥ ८

योगमार्गरता देवी सुरासुरनिषेविता।
मुक्तिदा शिवदा शुद्धा शुद्धमार्गसमर्चिता ॥ ९

ताराहारा वियद्रूपा स्वर्णताटङ्कशोभिता।
सर्वलक्षणसंपन्ना सर्वलोकहृदि स्थिता ॥ १०

सर्वेश्वरी सर्वतन्त्रा सर्वसंपत्प्रदायिनी।
शिवा सर्वान्नसन्तुष्टा शिवप्रेमरतिप्रिया ॥ ११

शिवान्तरङ्ग निलया रुद्राणी शंभुमोहिनी।
भवार्धधारिणी गौरी भव पूजनतत्परा॥ १२

भवभक्तिप्रियाऽपर्णा सर्वतत्त्वस्वरूपिणी।
त्रिलोकसुन्दरी सौम्या पुण्यवर्त्मा रतिप्रिया॥

पुराणी पुण्यनिलया भुक्तिमुक्तिप्रदायिनी।
दुष्टहन्त्री भक्तपूज्या भवभीतिनिवारिणी॥

सर्वाङ्ग सुन्दरी सौम्या सर्वावयवशोभिता।
कदम्बविपिनावासा करुणामृतसागरा॥

सत्कुलाधारिणी दुर्गा दुराचारविघातिनी।
इष्टदा धनदा शान्ता त्रिकोणान्तरमध्यगा॥

त्रिखण्डामृतसंपूज्या श्रीमत्त्रिपुरसुन्दरी।
स्तोत्रेणानेन देवेशीं विधुमण्डलमध्यगाम्।
ध्यायेज्जपेन्महादेवीं बालां सर्वार्थसिद्धिदाम्॥

## श्री बालाष्टोत्तरनामावलिः ५

ओं ऐं ह्रीं श्रीं अम्बायै नमः। मात्रे नमः। महालक्ष्म्यै नमः। सुन्दर्यै नमः। भुवनेश्वर्यै नमः। शिवायै नमः। भवान्यै नमः। चिद्रूपायै नमः। त्रिपुरायै नमः। भवरूपिण्यै नमः। भयङ्कर्यै नमः। भद्ररूपायै नमः। भैरव्यै नमः। भववारिण्यै नमः। भाग्यप्रदायै नमः। भावगम्यायै नमः। भगमण्डलमध्यगायै नमः। मन्त्ररूपपदायै नमः। नित्यायै नमः। पार्वत्यै नमः। २०

प्राणरूपिण्यै नमः। विश्वकर्त्र्यै नमः। विश्वभोक्त्र्यै नमः। विविधायै नमः। विश्ववन्दितायै नमः। एकाक्षर्यै नमः। मृडाराध्यायै नमः। मृडसन्तोषकारिण्यै नमः। वेदवेद्यायै नमः। विशालाक्ष्यै नमः। विमलायै नमः। वीरसेवितायै नमः। विधुमण्डलमध्यस्थायै नमः। विधुबिम्बसमाननायै

नमः । विश्वेश्वर्यै नमः । वियद्रूपायै नमः । विश्वमायायै नमः । विमोहिन्यै नमः । चतुर्भुजायै नमः । चन्द्रचूडायै नमः ।। ४०

चन्द्रकान्ति समप्रभायै नमः । वरप्रदायै नमः । भाग्यरूपायै नमः । भक्तरक्षणदीक्षितायै नमः । भक्तिदायै नमः । शुभदायै नमः । शुभ्रायै नमः । सूक्ष्मायै नमः । सुरगणार्चितायै नमः । गानप्रियायै नमः । गानलोलायै नमः । देवगानसमन्वितायै नमः । सूत्रस्वरूपायै नमः । सूत्रार्थायै नमः । सुरबृन्दसुखप्रदायै नमः । योगप्रियायै नमः । योगवेद्यायै नमः । योगिहृत्पद्मवासिन्यै नमः । योगमार्गरतायै देव्यै नमः । सुरासुरनिषे वितायै नमः । ६०

मुक्तिदायै नमः । शिवदायै नमः । शुद्धायै नमः । शुद्धमार्गसमर्चितायै नमः । ताराहारायै नमः । वियद्रूपायै नमः । स्वर्णताटङ्कशोभितायै नमः । सर्वलक्षणसंपन्नायै नमः । सर्वलोकहृदि स्थितायै नमः । सर्वेश्वर्यै नमः । सर्वतन्त्रायै नमः । सर्वसंपत्प्रदायिन्यै नमः । शिवायै नमः । सर्वान्नसन्तुष्टायै नमः । शिवप्रेमरतिप्रियायै नमः । शिवान्तरङ्गनिलयायै नमः । रुद्राण्यै नमः । शंभुमोहिन्यै नमः । भवार्ध धारिण्यै नमः । गौर्यै नमः । ८०

भवपूजनतत्परायै नमः । भवभक्तिप्रियायै नमः । अपर्णायै नमः । सर्वतत्त्व स्वरूपिण्यै नमः । त्रिलोकसुन्दर्यै नमः । सौम्यायै नमः । पुण्यवर्त्मने नमः । रतिप्रियायै नमः । पुराण्यै नमः । पुण्यनिलयायै नमः । भुक्तिमुक्तिप्रदायिन्यै नमः । दुष्टहन्त्र्यै नमः । भक्तपूज्यायै नमः । भवभीतिनिवारिण्यै नमः । सर्वाङ्गसुन्दर्यै नमः । सौम्यायै नमः । सर्वावयवशोभितायै नमः । कदम्बविपिनावासायै नमः । करुणामृतसागरायै नमः । सत्कुलाधारिण्यै नमः ।। १००

दुर्गायै नमः । दुराचारविघातिन्यै नमः । इष्टदायै नमः । धनदायै नमः । शान्तायै नमः । त्रिकोणान्तरमध्यगायै नमः । त्रिखण्डामृतसंपूज्यायै नमः । श्रीमत्त्रिपुरसुन्दर्यै नमः ।। १०८

# श्री बाला नित्यपूजा विधानम्

शुक्लाम्बरधरं + शान्तये। (प्राणानायम्य, )

मम उपात्तदुरितक्षयद्वारा श्री परमेश्वरप्रीत्यर्थं शुभे शोभने + श्री बाला त्रिपुरसुन्दरी प्रीत्यर्थं यथाशक्तिध्यानावाहनादिषोडशोपचार पूजां करिष्ये। तदङ्गं कलशपूजां करिष्ये।

कलशस्य मुखे विष्णुः कण्ठेरुद्रस्समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणास्स्मृताः॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदस्सामवेदो ह्यथर्वणः॥

अङ्गैश्च सहिताः सर्वे कलशाम्बु समाश्रिताः।
आयान्तु बाला पूजार्थं दुरितक्षयकारकाः॥

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥

कलशोदकेन देवीं आत्मानं पूजाद्रव्याणि सम्प्रोक्ष्य

अथ ध्यानम्—

ऐंकारासन गर्भितानल शिखां सौः क्लीं कला बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतांगरंगोज्ज्वलाम्।
वन्दे पुस्तकपाश साङ्कुशजपस्रग्भासुरोद्यत्करां
तां बालां त्रिपुरां परात्परकलां षट्चक्रसञ्चारिणीम्॥

श्री बालात्रिपुरसुन्दर्यै नमः ध्यायामि

श्री बालात्रिपुरसुन्दरि अस्मिन् बिम्बे स्थिरा भव। वरदा भव। सुमुखी भव । सुप्रसन्ना भव।

सर्वमङ्गलमाङ्गल्ये ! भक्ताभीष्टप्रदायिनि ! ।
आवाहयामि देवि ! त्वां सुप्रीता भव सर्वदा ।।

श्री बालात्रिपुरसुन्दरीं आवाहयामि, स्थापयामि, पूजयामि ।

बालाम्बिके ! महादेवि ! पूर्णचन्द्र निभानने ! ।
सिंहासनमिदं देवि ! गृहाण सुरवन्दिते ! ।

श्री बालात्रिपुरसुन्दर्यै नमः । रत्नसिंहासनं समर्पयामि ।

सूर्यायुतनिभस्फूर्ते ! स्फुरद्रत्नविभूषिते ।
पाद्यं गृहाण देवेशि ! सर्वकल्याणकारिणि[11]

श्री बालात्रिपुरसुन्दर्यै नमः। पादयोः पाद्यं समर्पयामि ।

सुवासितजलं रम्यं कस्तूरीपङ्कमिश्रितम् ।
गन्धपुष्पाक्षतैर्युक्तं अर्घ्यं दास्यामि सुन्दरि ।

श्री बाला त्रिपुरसुन्दर्यै नमः । हस्तयोः अर्घ्यं समर्पयामि ।

सुवर्ण कलशानीतं चन्दनागुरुसंयुतम् ।
गृहाणाचमनं देवि ! मया दत्तं सुरेश्वरि!

श्री बालात्रिपुरसुन्दर्यै नमः । मुखे आचमनीयं समर्पयामि ।

गङ्गाजलं मयानीतं महादेव शिरस्स्थितम् ।
शुद्धोदकस्नान मिदं गृहाण परमेश्वरि !

श्री बालात्रिपुरसुन्दर्यै नमः शुद्धोदकस्नानं समर्पयामि ।

मध्वाज्यदधिसंयुक्तं शर्कराक्षीर मिश्रितम् ।
पञ्चामृतस्नान मिदं गृहाण परमेश्वरि ।

श्री बालात्रिपुरसुन्दर्यै नमः पञ्चामृतस्नानं समर्पयामि ।

स्नानानन्तरं आचमनं समर्पयामि ।

सुरार्चिताङ्घ्रियुगले ! दुकूलवसनप्रिये !
वस्त्रयुग्मं प्रदास्यामि गृहाण त्रिपुरेश्वरि!

श्री बालात्रिपुरसुन्दर्यै नमः वस्त्रद्वयं समर्पयामि।

स्वर्णतन्तु समुद्भूतं रक्तवर्णेन शोभितम्।
भक्त्या दत्तं मया देवि ! कञ्चुकं परिगृह्यताम्।

श्री बालात्रिपुरसुन्दर्यै नमः कञ्चुकं समर्पयामि।

कर्पूरागरुकस्तूरीरोचनादिसुसंयुतम्
अष्टगन्धं प्रदस्यामि स्वीकुरुष्व शुभप्रदे !

श्री बालात्रिपुरसुन्दर्यै नमः गन्धं समर्पयामि।

शुद्ध स्वर्णकृतं देवि ! माङ्गल्यं मङ्गलप्रदम्।
सर्वमङ्गलमाङ्गल्यं गृहाण त्रिपुरेश्वरि!

श्री बालात्रिपुरसुन्दर्यै नमः मङ्गलसूत्रं समर्पयामि।

हरिद्रा शुभदा चैव स्त्रीणां सौभाग्यदायिनी।
कुङ्कुमं च मया दत्तं गृहाण सुरवन्दिते!

श्री बालात्रिपुरसुन्दर्यै नमः हरिद्रा कुङ्कुमं समर्पयामि।

मल्लिका जातिकुसुमैश्चम्पकैर्वकुलैरपि।
शतपत्रैश्च कल्हारैः पूजयामि वरप्रदे !

श्री बालात्रिपुरसुन्दर्यै नमः पुष्पाणि समर्पयामि।

दशाङ्गं गुग्गुलोपेतं सुगन्धं च मनोहरम्।
धूपं दास्यामि देवेशि ! गृहाण त्रिपुरेश्वरि !

श्री बालात्रिपुरसुन्दर्यै नमः धूपं समर्पयामि।

आचमनीयं समर्पयामि।

घृतवर्तिसमायुक्तं अन्धकार विनाशकम् ।
दीपं दास्यामि वरदे ! गृहाण मुदिता भव ।।

श्री बाला त्रिपुरसुन्दर्यै नमः दीपं दर्शयामि ।
आचमनीयं समर्पयामि ।

नैवेद्यं षड्रसोपेतं दधि मध्वाज्यसंयुतम् ।
नानाभक्ष्यफलोपेतं गृहाण त्रिपुरेश्वरि !

श्री बालात्रिपुरसुन्दर्यै नमः नैवेद्यं समर्पयामि ।

पूगीफलसमायुक्तं नागवल्ली दलैर्युतम् ।
एलालवङ्ग संयुक्तं ताम्बूलं प्रतिगृह्यताम् ।

श्री बालात्रिपुरसुन्दर्यै नमः ताम्बूलं समर्पयामि ।।

नीराजनं मयानीतं कर्पूरेण समन्वितम् ।
तुभ्यं दास्याम्यहं देवि ! गृह्यतां त्रिपुरेश्वरि!

श्री बालात्रिपुरसुन्दर्यै नमः कर्पूरनीराजनं समर्पयामि ।
आचमनीयं समर्पयामि ।

वाग्देवि ! वरदे ! देवि ! चन्द्ररेखा समन्विते !
मन्त्रपुष्पमिदं भक्त्या स्वीकुरुष्व मयार्पितम् ।।

श्री बालात्रिपुरसुन्दर्यै नमः मन्त्रपुष्पं समर्पयामि ।

यानि कानि च पापानि जन्मान्तर कृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिण पदे पदे ।।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात्कारुण्य भावेन रक्ष रक्ष दयामयि !

श्री बालात्रिपुरसुन्दर्यै नमः । प्रदक्षिण नमस्कारान् समर्पयामि ।
श्री बालात्रिपुरसुन्दर्यै नमः । छत्रं समर्पयामि ।
श्री बालात्रिपुरसुन्दर्यै नमः । चामरं वीजयामि ।

श्री बालात्रिपुरसुन्दर्यै नमः । दर्पणं समर्पयामि ।

श्री बालात्रिपुरसुन्दर्यै नमः । आन्दोलिकादि
समस्त राजोपचारान् समर्पयामि ।

अनया पूजया भगवती सर्वात्मिका
श्री बाला त्रिपुरसुन्दरी सुप्रीता सुप्रसन्ना वरदा भवतु ।

***



नवयोनियन्त्रम्

# श्री बालाहृदयम्

श्री पार्वत्युवाच—

महादेव नमस्तुभ्यं विरूपाक्षाय ते नमः।
बालाया हृदयं मन्त्रं गोप्याद्गोप्यतरं तथा॥ १

यस्य श्रवणमात्रेण मन्त्रसिद्धि मवाप्नुयात्।
बालाया हृदयं मन्त्रं ब्रह्मादीनां च दुर्लभम्॥ २

सकृच्छ्रवणमात्रेण वाञ्छितं फल माप्नुयात्।
सञ्चारवान् भवेत्पङ्गुः मूको वाग्मी तु यो भवेत्॥ ३

अस्य श्री बालात्रिपुरसुन्दरी हृदय महामन्त्रस्य, दक्षिणामूर्तिः ऋषिः, पङ्क्तिश्छन्दः, श्री बाला त्रिपुरसुन्दरी देवता, ऐं बीजं, सौः शक्तिः, क्लीं कीलकं श्री बाला त्रिपुरसुन्दरी प्रसादसिद्ध्यर्थे श्री बाला त्रिपुरसुन्दरी हृदय महामन्त्र जपे विनियोगः। मूलेन द्विरावृत्त्या कर हृदयन्यासः। ध्यानम्-

अरुणकिरणजालैः + नित्यकल्याणशीला॥

लमित्यादि पञ्चपूजा

मनुः - आं ह्रीं क्रों ऐं क्लीं सौः ह्रीं श्रीं बालापरमेश्वरि आवेशय आवेशय आं ह्सौं मम हृदये चिरं तिष्ठ तिष्ठ हुं फट् स्वाहा। इति जपेत्।

बालाया हृदयेनैव त्रिकालं सप्तमन्त्रितम्।
पयः पिबति या वन्ध्या सा च पुत्रवती भवेत्॥

नित्यमष्टोत्तरशतं बालाया हृदयं जपन्।
चिन्तितं च लभेद्देवि ! नात्र कार्या विचारणा॥

१

# श्री बालास्तोत्रम्

वेलातिलङ्घ्य करुणे ! विबुधेन्द्र वन्द्ये
लीलाविनिर्मित चराचरहृन्निवासे।
माला किरीट मणि कुण्डल मण्डिताङ्गे
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ १

कञ्जासनादि मणि मञ्जु किरीट कोटि
प्रत्युप्तरत्नरुचि रञ्जित पाद पद्मे।
मञ्जीर मञ्जुल विनिर्जित हंस नादे
बालाम्बिके मयि निधेहि कृपाकटाक्षम्॥

प्रालेयभानु कलिका कलितातिरम्ये
पादाग्रजावलि विनिर्जित मौक्तिकाभे।
प्राणेश्वरि ! प्रमथलोकपते ! प्रजानां
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ३

जङ्घादिभिर्विजित चित्तज तूणिभागे
रम्भादि मार्दव करीन्द्र करोरुयुग्मे।
शम्पाशताधिक समुज्ज्वल चेललीले !
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ४

माणिक्यमौक्तिक विनिर्मित मेखलाढ्ये
माया विलग्न विलसन्मणिपट्टबन्धे।
लोलम्बराजि विलसन्नव रोमजाले
बालांबिके ! मयि निधेहि कृपाकटाक्षम्॥ ५

न्यग्रोधपल्लव तलोदर निम्ननाभे
निर्धूतहार विलसत्कुच चक्रवाके।
निष्कादि मञ्जु मणि भूषण भूषिताङ्गे
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ६

कन्दर्प चाप मदभङ्ग कृतादिरम्ये
भ्रूवल्लरी विविध चेष्टित रम्यमाने।
कन्दर्प सोदर समाकृति फालदेशे
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ७

मुक्तावली विलसदूर्मित कम्बुकण्ठे
मन्दस्मितानन विनिर्मित चन्द्रबिम्बे।
भक्तेष्टदान निरतामृत पूर्णदृष्टे
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ८

कर्णावलम्बि मणि कुण्डल गण्ड भागे
कर्णान्त दीर्घ नवनीरज पत्र नेत्रे।
स्वर्णायकादि गुण मौक्तिक शोभिनासे
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ ९

लोलम्बराजि ललितालक जालशोभे
मल्ली नवीन कलिका नव कुन्दजाले।
भालेन्दु मञ्जुल किरीट विराजमाने
बालाम्बिके ! मयि निधेहि कृपाकटाक्षम्॥ १०

बालाम्बिके ! महाराज्ञि ! विद्या(वैद्य)नाथ प्रियेश्वरि !
पाहि मामम्ब ! कृपया त्वत्पादं शरणं गतः॥ ११

* * *

# श्री बालामहामालामन्त्रस्तवः

अस्य श्री बाला त्रिपुरसुन्दरी महामाला मन्त्रस्य दक्षिणामूर्तिः ऋषिः। पंक्तिश्छन्दः। श्रीबाला त्रिपुरसुन्दरी देवता। ऐं बीजं, सौः शक्तिः क्लीं कीलकम्। श्रीबालात्रिपुरसुन्दरीप्रीत्यर्थे महामालामन्त्रपारायणे विनियोगः। मूलविद्याद्विरावृत्त्या कर हृदयन्यासः—

ध्यानम्–

रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम्।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम्।। १

विद्याक्षमालासुकपाल मुद्राराजत्करां कुन्दसमान कान्तिम्।
मुक्ताफलालङ्कृतशोभिताङ्गीं बालां भजे वाङ्मयसिद्धिहेतोः।। २

भजे कल्प वृक्षाध उद्दीप्त रत्नासने सन्निषण्णां मदाघूर्णिताक्षीम्।
करैर्बीजपूरं कपालेषु चापं सपाशाङ्कुशां रक्तवर्णां दधानाम्।। ३

व्याख्यानमुद्रामृतकुंभविद्यामक्षस्रजं सन्दधती कराग्रैः।
चिद्रूपिणीं शारद चन्द्रकान्तिं बालां भजे मौक्तिकभूषिताङ्गीम्।।

लमित्यादि पञ्चपूजां कुर्यात्

वं वं वषट् वौषट् श्रौषट् आं ह्रीं क्रों ऐं क्लीं सौः आं ऐं ह्रीं क्लीं सौः, आं ह्रीं क्रों ऐं क्लीं सौः श्रीं हंसः नमो भगवति बाला परमेश्वरि, ऐं ह्रीं श्रीं ह्सौः स्हौः सहक्षमलवरय ईं हसक्षमलवरय ॐ श्री गुरु परमगुरु परमेष्ठि गुरु परापर गुरुस्वरूपे, ऐं क्लीं सौः सकलजगदुत्पत्ति मातृके, अकारादि क्षकारान्त मातृकावर्ण स्वरूपिणि, इच्छा ज्ञान क्रिया शक्त्यात्मिके, ऐं क्लीं सौः बीजत्रयात्मिके, बिन्दुत्रयात्मिके,

त्रिकूटात्मके, त्रिगुणात्मके, त्रिखण्डात्मके, त्रिचक्रात्मके, त्रिकोणात्मके, त्र्यक्षरे, त्रिपुरे, ऐं क्लीं सौः पञ्चभूतात्मके, त्रिशक्त्यात्मके, पञ्चकृत्यपरायणे, सृष्टि स्थिति संहार तिरोधानानुग्रहकारिके, पञ्च प्रेत मञ्चाधिशायिनि, ऐं क्लीं सौः अतल वितल सुतल तलातल रसातल, महातल पाताल भूर्लोक भुवर्लोक सुवर्लोक महोलोक जनोलोक तपोलोक सत्यलोक भुवनैकवीरमात्रे, समुद्यदादित्यसहस्राभे, सोमसूर्याग्नि लोचनत्रयराजिते, चन्द्रकलावतंसे, रक्ताम्बरधारिणि, पुस्तकाक्षमालावराभयकर विभूषिते, कनकवज्र वैडूर्यमुक्तालङ्कारभूषिते, ऐं ऐं सौः क्लीं क्लीं ऐं सौः सौः क्लीं नवाक्षरात्मके, नवकोणपुरावासे, नववर्षवयोविशिष्टाङ्गि, बालात्रिपुरे, ब्राह्म्याद्यष्टमातृकापरिसेविते, अणिमाद्यष्टैश्वर्यप्रदे, बालाम्बिके, एह्येहि आगच्छागच्छ, मम शरीरे प्रवेशय प्रवेशय, मम सकलकार्याणि साधय साधय, दुर्गतिं मोचय मोचय, श्रियं प्रापय, प्रापय, आं ऐं ह्रीं क्लीं क्रों सौः आं ह्रीं क्रों ऐं क्लीं सौः, ऐं ऐं नमो बालावागीश्वरि, ऐं ऐं कर्पूरधवळाकारप्रभे, ऐं ऐं व्रजमौक्तिक मुक्तालङ्कार भूषिते, ऐं ऐं मुक्ताक्षमाला पुस्तकवराभयकर विभूषिते, ऐं ऐं शुभ्राम्बरधारिणि, ओं ह्रीं ह्सूरैं ह्रीं ओं ऐं धीं क्लीं सौः महासरस्वत्यात्मके, ऐं ऐं महासारस्वतप्रदे, ऐं ऐं वेदवेदाङ्ग न्यायमीमांसा पुराण धर्मशास्त्रात्मके, मम निखिलभाषासु अनवद्यगद्यपद्यरचनाचातुर्यं दापय दापय, विविधतर्क विगाहितसमस्त शास्त्र सागरगरीयःप्रतिभां प्रापय प्रापय, ऐं ऐं वदवद वाग्वादिनि, ऐं ऐं गङ्गातरङ्गकल्लोल वाक्पटुत्वप्रदे मम सकलभाषासु मृदुमधुर रसभावभासुर वाग्जालं देहि देहि, आं ऐं ह्रीं क्लीं क्रों सौः आं ह्रीं क्रों ऐं क्लीं सौः, क्लीं क्लीं नमो भगवति बाला कामेश्वरि, इच्छाकामफलप्रदे, क्लीं क्लीं रक्तगन्धानुलेपने क्लीं क्लीं

बन्धूककुसुमाकार कान्तिभूषण भूषिते, क्लीं क्लीं रक्तालङ्कार भूषिते, क्लीं क्लीं रक्तमाल्याम्बर धारिणि, क्लीं क्लीं इक्षुकोदण्डपुष्पेषु पाशाङ्कुशकरभूषिते, क्लीं क्लीं सर्वसत्ववशङ्करि, क्लीं क्लीं सर्वलोकाकर्षिणि, क्लीं क्लीं सकल कामप्रपूरणि, क्लीं क्लीं असाध्यसाधिनि, मम दृष्टादृष्टानां सर्वेषां स्त्रीपुरुषाणां जनानां गति मति हृदय चित्तादिकमाकर्षयाकर्षय, वशमानय वशमानय, सम्मोहय सम्मोहय, आं ऐं ह्रीं क्लीं क्रों सौः, आं ह्रीं क्रों ऐं क्लीं सौः, सौः सौः नमो बाला सौभाग्येश्वरि, सौः सौः हेमप्रभाभासमाने, सौः सौः विद्युन्निकरनमत्प्रभे, सौः सौः स्फुरच्चन्द्रकलापूर्णे कलशवरदाभय ज्ञानमुद्राकर विभूषिते, सौः सौः स्रवत्पीयूषधाराभिवर्षिणि, महासौन्दर्य सुभगे, सौः सौः महामृत्युविनाशिनि, सौः सौः सर्वशत्रुसंक्षोभिणि, मम शत्रुभिः कृतक्रियमाण करिष्यमाण निखिलमन्त्र यन्त्रतन्त्र प्रयोगान् उच्चाटय उच्चाटय विविध प्रयोगान् नाशय नाशय, सौः सौः सर्वशत्रुभयङ्करि, मम शत्रूणां वाक्चित्तचक्षुर्जिह्वागळचेष्टादिकान् स्तम्भय स्तम्भय, आं ऐं ह्रीं क्लीं क्रों सौः आं ह्रीं क्रों ऐं क्लीं सौः नमो बाला त्रिपुरसुन्दरि, ऐं क्लीं सौः सर्वोपद्रवनाशिनि, राजचोरसर्प सिंहवृश्चिकव्याघ्राग्नि जल विषादिकोत्पन्नान् सर्वोपद्रवान् नाशय नाशय, ऐं क्लीं सौः सर्वव्याधिविनाशिनि, सर्वरोगान्नाशय नाशय, आरोग्यं दापय दापय, ऐं क्लीं सौः महासाम्राज्यदायिनि, ऐं क्लीं सौः सर्वसम्पत्प्रपूरणि, सर्वसौभाग्यप्रदे, महासम्पत्प्रदे मम सकलैश्वर्यं दापय दापय, ऐं क्लीं सौः जये विजये जिते अपराजिते सकललोक जयप्रदे मम सर्वत्र सर्वदा यशोविजयादिकं देहि देहि, सकुटुम्बं सपरिवारं मां रक्ष रक्ष आं ऐं ह्रीं क्लीं क्रों सौः आं ह्रीं क्रों ऐं क्लीं सौः सकलजगन्नुतायै श्री बालात्रिपुरसुन्दर्यै ह्रीं हुं फट् स्वाहा।

अनेन मया कृतेन श्री बालात्रिपुरसुन्दरी महामालामन्त्रजपेन भगवती सर्वात्मिका श्री बालात्रिपुरसुन्दरी सुप्रीता सुप्रसन्ना वरदा भवतु। श्री बाला त्रिपुरसुन्दरी चरण समर्पितोऽस्तु।

## श्री बाला त्रिपुरसुन्दरी मन्त्रभेदाः

ऐं क्लीं सौः (त्र्यक्षरी मूलविद्या)

१. ह्रीं क्लीं ह्सौः
२. ऐं क्लीं सौः सौः क्लीं ऐं
३. श्रीं क्लीं ह्रीं ऐं क्लीं सौः ह्रीं क्लीं श्रीं
४. ऐं क्लीं सौः बाला त्रिपुरे स्वाहा
५. ऐं क्लीं ह्सौः बालात्रिपुरे सिद्धिं देहि नमः
६. ह्रीं श्रीं क्लीं त्रिपुराभारति कवित्वं देहि स्वाहा
७. श्रीं ह्रीं क्लीं त्रिपुरा मालिनि मह्यं सुखं देहि स्वाहा
८. स्क्लीं क्ष्म्यां ऐं त्रिपुरे सर्ववाञ्छितं देहि नमः स्वाहा
९. ह्रीं ह्रीं ह्रीं प्रौढत्रिपुरे आरोग्यमैश्वर्यं देहि स्वाहा
१०. ह्रीं श्रीं क्लीं त्रिपुरामर्दने सर्वं शुभं साधय स्वाहा
११. श्रीं ह्रीं क्लीं बालात्रिपुरे मदायत्तां विद्यां कुरु नमः स्वाहा
१२. ह्रीं श्रीं क्लीं परापरे त्रिपुरे सर्वमीप्सितं साधय स्वाहा
१३. क्लीं क्लीं श्रीं श्रीं ह्रीं ह्रीं त्रिपुराललिते मदीप्सितां योषितं देहि वाञ्छितं कुरु स्वाहा।
१४. क्लीं क्लीं क्लीं श्रीं श्रीं श्रीं ह्रीं ह्रीं ह्रीं त्रिपुरसुन्दरि सर्वं जगन्मम वशं कुरु कुरु मह्यं बलं देहि स्वाहा

****

# श्रीबालास्तवराजः - १

श्रीमातः परमेशतल्पनिलये वन्दारु बृन्दानुते
सिन्दूरद्रवकुङ्कुमोदकजपापुष्पप्रभे मङ्गळे ।
श्रीबीजेन समन्वितं तव मनुं भक्त्या जपन्तं सदा
भक्तं मामवलोकयाशु कृपया लक्ष्म्या सहैवाम्बिका ।। १

ऐमित्यक्षरमम्बिके शशिनिभं बालार्ककोट्युज्ज्वले
बालानामपि वाग्विजृम्भणपटु प्रख्यातविद्याप्रदम् ।
बीजं बिम्बविडम्बिदन्तिरदने विद्यामुखे सर्वदा
बालायाः कलयामि कल्पलतिके भक्तिप्रसन्ने शिवे ।। २

क्लीमित्येकमहेशमानिनि सदा मन्दस्मिते मङ्गळे
बन्धूकारुण पाणिपल्लवलसत्पुण्ड्रेक्षुपाशोज्ज्वले ।
नानारत्नविभूषिते सुरनुते रक्ताम्बरालङ्कृते
त्वद्रूपं हृदि चिन्तयामि सततं सर्वार्थसिद्धिप्रदम् ।। ३

सौवर्णं कमलासनस्य दयिते वैश्वानरार्चिर्मयी
कर्पूरोज्ज्वलवीटिकापरिलसद्बिम्बाधरोद्यन्मुखे ।
साधारे च तुरीयया च परया सम्पूजिताङ्घ्रिद्वये
यस्त्वां ध्यायति मन्त्रवर्यमसकृज्जस्त्वापि वाग्मी भवेत् ।।४

ऐं क्लीं सौः सकलापदार्तिशमनं तार्तीयखण्डोग्रगं
यो वा भक्तिपुरस्सरो मृदुभुजे सौवर्णपीठोज्ज्वले ।
कामेशो कलयामि कुन्दरदने कन्दर्पबीजोज्ज्वले
मन्त्रं ते मदभीष्टदं दिनकरज्योतिर्मयं सर्वदा ।। ५

कल्याणं तव रूपमम्बरमणी दृष्ट्वा कुचत्वं गतौ
चन्द्रो विस्मितजालमीशवनिते ताधस्तसैन्यं गता ।

त्वद्रूपं किमु तर्पयामि वद मे कन्दर्प विद्यात्मिके
कामेशोपि तवावलोकनवशादर्धाङ्गनात्वं गतः ॥ ६

एतामेव विभावयन्ति मुनयः सायुज्यमुक्तिप्रदां
एकान्ते रविमण्डलेऽभ्यवलये हेमाद्रिशृङ्गे बुधौ।
आनन्दामृतसिन्धुमग्नहृदया रोकुञ्चमानोभवा
त्वां देवीमनुचिन्तयामि सततं चित्ते भजे मामके ॥ ७

लक्ष्मीप्रदानसमये नवविद्रुमाभां
विद्याप्रदानसमये शरदिन्दुशुभ्राम्।
विद्वेषिवर्गविजये च तमालनीलां
बालां त्रिलोकजननीं शरणं प्रपद्ये ॥ ८

इति श्री बालास्तवराजः

जयतु जयतु बाला भारती ब्रह्मरूपा
जयतु जयतु बाला वैष्णवी विष्णुरूपा
जयतु जयतु बाला रौद्रिणी रुद्ररूपा
जयतु जयतु बाला चिन्मयी ज्ञानरूपा।

हृत्पुण्डरीकाननभासमाना
चित्कुण्डली चञ्च दुदारमाना।
पुस्ताक्षसूत्रस्फुरदब्ज हस्ता
बाला धियं यच्छतु नः प्रशस्ता ॥

# बालास्तवराजः - २

भजे निरामयं वस्तु जगत्त्रयविमोहनम् ।
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ॥ १

उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ।
जपाकुसुमसंकाशां पद्मरागसमप्रभाम् ॥ २

विद्युत्पुञ्जनिभां तप्तकाञ्चनाभां सुरेश्वरीम् ।
रक्तोत्पलदलाकारपादपल्लवराजिताम् ॥ ३

अनर्घ्यरत्नखचितमञ्जीरिचरणद्वयाम् ।
पादाङ्गुळीयकक्षिप्तरत्नतेजोविराजिताम् ॥ ४

कदळीललितस्तम्भसुकुमारोरुकोमलाम् ।
अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ॥ ५

अनर्घ्यमौक्तिकस्यूत हारभारविराजिताम् ।
उद्यदादित्यसङ्काशताटङ्ककुसुमप्रभाम् ॥ ६

पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् ।
स्फुरन्मादनकोदण्डसुभ्रुवं पद्मलोचनाम् ॥ ७

ललाटपट्टसंराजद्रत्नाढ्यतिलकाञ्चिताम् ।
मुक्तामाणिक्यघटितमकुटस्थलकिङ्किणीम् ॥ ८

स्फुरच्चन्द्रकलाराजन्मकुटां लोचनत्रयीम् ।
प्रवालपल्लवलसद्बाहुवल्लीचतुष्टयाम् ॥ ९

इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् ।
सर्वदेवमयीं बालां श्रीमत्त्रिपुरसुन्दरीम् ॥ १०

सर्वतीर्थमयीं विद्यां सर्वकामप्रपूरणीम्।
सर्वाम्नायमयीं विद्यां सर्वदेवोपशाम्भिताम्॥ ११

एवं ध्यात्वा परां बालां वामनासापुटक्रमात्।
त्रिकोणमुद्रया बिन्दौ महापद्ममनुस्मरेत्॥ १२

आवाह्य बालां तन्मन्त्रं पठन्पीठे स्थितां स्मरेत्॥ १३

(मन्त्ररहस्यतः)

***

# श्री बालास्तोत्रम्

श्रीभैरवः -

अधुना देवि बालायाः स्तोत्रं वक्ष्यामि पार्वति।
पञ्चमाङ्गं रहस्यं मे श्रुत्वा गोप्यं प्रयत्नतः॥ १

अरुणकिरणजालै रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता।
इतरकरवराढ्या फुल्लकह्लारसंस्था
निवसतु हृदि बाला नित्यकल्याणशीला॥ २

वाणीं जपेद् यस्त्रिपुरे भवान्या बीजं निशीथे जडभावलीनः।
भवेत् स गीर्वाणगुरोर्गरीयान् गिरीशपत्नि प्रभुतादि तस्य॥ ३

कामेश्वरि त्र्यक्षरीकामराजं जपेद् दिनान्ते तव मन्त्रराजम्।
रम्भापि जंम्भारिसभां विहाय भूमौ भजेत् तं कुलदीक्षितं च॥ ४

तार्तीयकं बीजमिदं जपेद् यस्त्रैलोक्यमातस्त्रिपुरे पुरस्तात्।
विधाय लीलां भुवने तथान्ते निरामयं ब्रह्मपदं प्रयाति॥ ५

धरासद्मत्रिवृत्ताष्ट-पत्रषट्कोणनागरे।
बिन्दुपीठेऽर्चयेद्बालां योऽसौ प्रान्ते शिवो भवेत्॥ ६

इति मन्त्रमयं स्तवं पठेद् यस्त्रिपुराया निशि वा निशावसाने।
स भवेद् भुवि सार्वभौममौलिस्त्रिदिवे शक्रसमानशौर्यलक्ष्मीः॥ ७

इतीदं देवि बालायाः स्तोत्रं मन्त्रमयं परम्।
अदातव्यमभक्तेभ्यो गोपनीयं स्वयोनिवत्॥ ८ (रुद्रयामले)

* * *

# श्री बालालघुस्तवराजः

(श्री बालाविंशतिस्तवः लघुस्तवः इत्यपि नामान्तरम्।)

लघुभट्टारकाख्य कालिदासविरचितः

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभाम्
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः।
एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहः स्थिता
छिद्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी॥ १

या मात्रा त्रपुषीलतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः॥ २

दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम्।
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे
वाचः सूक्तिसुधारस द्रवमुचो निर्यान्ति वक्त्राम्बुजात्॥ ३

यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयिनीं नीत्वोच्चरन्ति स्फुटम्॥ ४

यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैः
तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम्।
अस्त्वौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गौः शब्दो गिरि वर्तते सुनियतं योगं विना सिद्धिदः॥ ५

एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात्।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम्॥ ६

वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम्।
उज्जृम्भाम्बुजपत्रकान्तिनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः॥ ७

ये त्वां पाण्डरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम्।
अश्रान्तं विकचस्फुटाक्षरपदा निर्याति वक्त्राम्बुजात्
तेषां भारति भारती सुरसरित्कल्लोललोलोर्मिवत्॥ ८

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमां
उर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर—
क्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्त्रियः॥ ९

चञ्चत्काञ्चनकुण्डलाङ्गदधरां आबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम्।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः ।। १०

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम्।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ।। ११

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निश्शेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः।
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवद्
देवि त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ।। १२

चण्डि त्वच्चरणाम्बुजार्चनकृते बिल्वीदलोल्लुण्ठन-
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः।
ते दण्डाङ्कुशचक्रचापकुलिश श्रीवत्समत्स्याङ्कितैः
जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ।। १३

विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः
त्वां देवि त्रिपुरे परापरकलां सन्तर्प्य पूजाविधौ।
यां यां प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ।। १४

शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम्।
लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ।। १५

देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वराः
त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः।
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६

लक्ष्मीं राजकुले जयां रणमुखे क्षेमङ्करीमध्वनि
क्रव्यादद्विपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ।
भूतप्रेतपिशाचजम्भकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्ताराश्च तोयप्लवे ॥ १७

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ १८

आईपल्लवितैः परस्परयुतैर्द्विद्विक्रमादक्षरैः
काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९

बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसो यत्राद्यवृत्ते स्फुटम्।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरैः
मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥ २०

सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि।
सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥ २१

***

# श्रीबालापटलम्

कैलासशिखरासीनं भगवन्तमुमापतिम् ।
चन्द्रार्धमुकुटं देवं सोमसूर्याग्निलोचनम् ।। १

गजचर्मपरीधानं विरूपाक्ष सुरार्चितम् ।
गणगन्धर्वयक्षेन्द्र-देवासुरनमस्कृतम् ।। २

विहसन्तं जपन्तं च पठन्तं च मुहुर्मुहुः ।
उत्थाय प्रणता भूत्वा चेदं पृच्छति भैरवी ।। ३

श्री भैरवी–
भगवन् करुणाम्भोधे सर्वागमविशारद ।
त्वत्प्रसादान्मया सर्वाः श्रुता विद्याः सुरेश्वर ।। ४

इदानीं श्रोतुमिच्छामि बालां त्रिपुरसुन्दरीम् ।
दयास्ति यदि मे देव वद विद्यां महेश्वर ।। ५

श्रीभैरवः–
शृणु देवि ! प्रवक्ष्यामि पञ्चाङ्गं साधकेष्टदम् ।
पटलं पद्धतिं वर्म तथा नाम्नां सहस्रकम् ।। ६

स्तवराजं महादेवि शृणुष्वैकाग्रमानसा ।
श्रीबाला परमेशानी भुक्तिमुक्तिप्रदायिनी ।। ७

राज्यं देयं शिरो देयं गृहं लक्ष्मीयुतं तथा
सर्वं देयं महादेवि न देयमिदमुत्तमम् ।। ८

अस्या विद्यायाः सदृशी विद्या नान्या कलौ युगे ।
श्रीबालात्रिपुराविद्या शीघ्रं सिद्धिप्रदा स्मृता ।। ९

देया शिष्याय शान्ताय गुरुभक्तिरताय च ।
नाभक्ताय प्रदातव्या विद्येयं परमेश्वरि ।। १०

मन्त्रोद्धारं तथा यन्त्रं प्रस्तारं ध्यानमेव च।
प्रयोगान् संप्रवक्ष्यामि देवदेव्या महेश्वरि॥ ११

प्रथमं शृणु देवेशि मन्त्रोद्धारं फलप्रदम्।
गोपनीयं प्रयत्नेन येन सिद्धिः प्रजायते॥ १२

वाग्भवं कामराजश्च शक्तिमध्येऽभिधं न्यसेत्।
नमोऽन्ते देवि बालाया मन्त्रोऽयं चाष्टवर्णकः॥ १३

नापि विघ्नो न वाशौचो न वारनियमस्तथा।
स्वयं सिद्धो महादेवि मन्त्रराजः कलौ युगे॥ १४

दक्षिणामूर्तिपङ्क्त्यौ च मुनिश्छन्दः क्रमात् स्मृतम्।
देवता त्रिपुरा बाला आद्यन्ते बीजशक्तिके॥ १५

क्लीं कीलकं समादिष्टं धर्मकामार्थमुक्तये।
शिरसि वदने देवि हृदये गुह्यदेशके॥ १६

पादयोर्नाभिकमले सर्वाङ्गे च तथा न्यसेत्।
ऋष्यादिकं महादेवि कुर्यान्न्यासविकल्पनाम्॥ १७

करन्यासं षडङ्गं च बीजैः कुर्यान्महेश्वरि।
अस्या ध्यानं प्रवक्ष्यामि साधकानां हितप्रदम्॥ १८

रक्ताम्बरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम्।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम्॥ १८

इति ध्यात्वा महादेवीं जपेन्मत्रं सुसिद्धदम्।
लक्षत्रयं पुरश्चर्याविधौ साधकसत्तमः॥ २०

अथ वक्ष्यामि देवेशि यन्त्रोद्धारं सुदुर्लभम्।
साधकस्य महादेव्या भुक्तिमुक्तिफलप्रदम्॥ २१

बिन्दुत्रिकोणवसु(रस)कोणकनागपत्रवृत्तत्रयाञ्चितमहीसदनत्रयं च
बालादिचक्रमिदमार्तिहरं गिरीशे ब्रह्मेन्द्रविष्णुनमितं गदितं मया ते ।।

एवं विलिखिते यन्त्रे पीठशक्तीः प्रपूजयेत् ।
इच्छाज्ञानक्रियाश्चैव कामिनी कामदायिनी ।।  २३

रती रतिप्रियानन्दा मनोन्मन्यपि चान्तिमा ।
पीठशक्तीरिमा इष्ट्वा पीठं तन्मनुना दिशेत् ।।  २४

व्योमपर्वततातार्तीयं सदाशिवमहापदम् ।
पीठपद्मासनायान्ते नमोऽन्तः पीठमन्त्रकः ।।  २५

षोडशार्णस्ततो मूर्तौ क्लृप्तायां मूलमन्त्रतः ।
आवाह्य पूजयेद् देवीमुपचारैः पृथग्विधैः ।।  २६

देवीमिष्ट्वा मध्ययोनौ त्रिकोणे मतिपूर्वकम् ।
वामकोणे रतिं दक्षे प्रीतिमग्रे मनोभवाम् ।।  २७

योन्यां तु वह्निकोणादावङ्गानि परिपूजयेत् ।
मध्ययोन्यां बहिः पूर्वदिक्षु चाग्रे स्मरानपि ।।  २८

बाणदेवीस्तद्वदेव शक्तीरष्टासु योनिषु ।
सुभगाख्या भगा पश्चात्तृतीया भगसर्पिणी ।।  २९

भगमाला तथानङ्गाद्यानङ्गकुसुमा परा ।
अनङ्गमेखलानङ्गमदनेत्यष्टशक्तयः ।।  ३०

पद्मकेसरगा ब्राह्मीमुखाः पत्रेषु भैरवाः ।
दलाग्रेऽप्यष्ट पीठानि कामरूपाख्यमादिमम् ।।  ३१

मलयं कौलगिर्याख्यं चौहाराख्यं कुलान्तकम् ।
जालन्धरं तथौड्याणं देवकूटमथाष्टमम् ।।  ३२

भूगृहे च धरादिक्षु हेरुकं त्रिपुरान्तकम्।
वेतालमग्निजिह्वं च कालान्तककपालिनौ॥ ३३

एकपादं भीमरूपं मलयं हाटकेश्वरम्।
शक्राद्यानायुधैः सर्वैः स्वस्वदिक्षु समर्चयेत्॥ ३४

तद्बहिर्दिक्षु वटुकं योगिनीः क्षेत्रपालकम्।
गणेशं विदिशासु वै वसून् सूर्यं शिवं तथा॥ ३५

(सर्वभूतान् समभ्यर्च्य पूजयेदायुधांस्तथा)।
बालां मध्ये विभाव्यादौ कामेश्वराङ्कमध्यगाम्॥ ३६

मकारैः पञ्चभिः कौलः कौलाचारपरायणः।
संपूजयेन्महादेवि साधको मन्त्रसाधकः॥ ३७

बिन्दौ गन्धाक्षतैः पुष्पैर्धूपदीपादितर्पणैः।
लयाङ्गमिदमाख्यातं प्रयोगान् शृणु पार्वति॥ ३८

यान् विधाय मनुः शीघ्रं सिद्धिभाग् भवति ध्रुवम्।
स्तम्भनं मोहनं चैव मारणाकर्षणे तथा॥ ३९

वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं तथा।
एतत्साधनमाचक्षे सारभूतं मनोः प्रिये॥ ४०

अदेयं देव्यभक्ताय गोप्यं गुह्यतमं पशोः।
१. प्रतिपद्दिवसे देवि ! स्नात्वा कृत्वाह्निकीं क्रियाम्॥ ४१

मध्याह्ने निर्जनं गत्वा यथावदयुतावधि।
होमो दशांशतः कार्यो घृतपायसबर्हकैः।
संतर्प्य देवताः सद्यः स्तम्भनं जायते ध्रुवम्।
राजसूर्येन्दुवातानां दस्युवादिमुखेषु च॥ ४२

२. दर्शे सायं श्मशाने तु जपेदुलूकविष्टरः ।
अयुतं तद्दशांशेन होमं सर्पिस्सुरान्वितैः ॥ ४४

भूताख्ये वासरे देवि गत्वा प्रेतालयं निशि ॥ ४५

चिताग्रे संजपेद्विद्यां वीरेन्द्रः षोडशाक्षरीम् ।
अयुतं च हुनेन्मन्त्री चिताग्नौ घृतगुग्गुलम् ॥ ४६

चण्डालकेशसहितं म्रियते रिपुरुत्कटः ।
४. अष्टम्यां शुक्लपक्षे तु जपेद्रहसि साधकः ॥ ४७
अयुतं मूलविद्याया ध्यात्वा कान्तां मनोगताम् ।
होमो दशांशतः सर्पिर्लाक्षापुष्पवतीरजः ॥ ४८

करीरपूलगोधूमैः स्त्रीणामाकर्षणं भवेत् ।
५. नवम्यां साधकः स्नात्वा कृत्वा कर्माह्निकं प्रिये ॥ ४९

अयुतं घृतमत्स्याण्ड-पद्ममुक्तैणरोमभिः ।
होमो विधेयो वरिशौ (?) वासवो दासतां व्रजेत् ॥ ५०

६. चतुर्थ्यां कृष्णपक्षे तु जपेच्चन्द्रोदये शिवे ।
नदीतीरे मनुं वीरोऽयुतं शीर्षासनस्थितः ॥ ५१

दशांशेन हुनेत्तत्र घृतनीलोत्पलत्वचः ।
लवङ्गमरिचाम्लादीन् रिपोरुच्चाटनं भवेत् ॥ ५२

७. पञ्चम्यां निशि देवेशि जपेदयुतसंख्यया ।
हुनेद् दशांशतः सर्पिर्मत्स्यमत्स्याण्डखर्परान् ॥ ५३

महामय - महाभीति - महोपद्रवशान्तये ।
८. महाष्टम्यां नरः स्नात्वा पीठे श्रेष्ठे दशाधिकाम् ॥ ५४

वीरो दशाङ्कसाहस्रीं हुनेत्तत्र दशांशतः ।
घृतखर्जूरमृद्वीका-नागवल्लीदलस्रजः ॥ ५५

छागमांसं सरक्तं च महापुष्टिः प्रजायते।
इदं रहस्यमाख्यातं सर्वतत्त्वनिरूपणम्॥ ५६

सर्वस्वं मम देवेशि रहस्यं गोपयेत् कलौ।
सूर्यादिवारेषु जपैर्दशसाहस्रसंख्यकैः॥ ५७

सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा।
इत्येष पटलो दिव्यः स्नेहात् तव प्रकाशितः।
गोप्याद् गोप्यो गोप्यतरो गोपनीयः स्वयोनिवत्॥ ५८

(श्रीमद्रुद्रयामले)

****

# श्री बालाकवचम् - १

वाग्भवं पातु शिरसि कामराजं सदा हृदि।
शक्तिबीजं सदा पातु नाभौ गुह्ये च पादयोः॥ १

ऐं क्लीं सौः वदने पातु बाला सर्वार्थसिद्धये।
जिह्वां पातु महाहंसी स्कन्धदेशे तु भैरवी॥ २

सुन्दरी नाभिदेशं तु शिरसि कमला सदा।
भ्रुवौ नासाद्वयं पातु महात्रिपुरसुन्दरी॥ ३

ललाटे सुभगा पातु कण्ठदेशे तु मालिनी।
वाग्भवं पातु हृदये उदरे भगसर्पिणी॥ ४

भगमालिनी नाभिदेशे लिङ्गे पातु मनोभवा।
गुह्ये पातु महादेवी राजराजेश्वरी शिवा॥ ५

चैतन्यरूपिणी पातु पादयोर्जगदम्बिका।
नारायणी सर्वगात्रे सर्वकाले शिवङ्करी॥ ६

ब्रह्माणी पातु मां पूर्वे दक्षिणे पातु वैष्णवी ।
पश्चिमे पातु वाराही उत्तरे तु महेश्वरी ।। ७

आग्नेय्यां पातु कौमारी महालक्ष्मीस्तु नैर्ऋते ।
वायव्यां पातु चामुण्डा इन्द्राणी पातु ईशके ।। ८

आकाशे च महामाया पृथिव्यां सर्वमङ्गला ।
आत्मानं पातु वरदा सर्वाङ्गे भुवनेश्वरी ।। ९

(सिद्धयामले)

****

## श्री बालाकवचम् - २

श्रीपार्वत्युवाच–
देवदेव महादेव शङ्कर प्राणवल्लभ ।
कवचं श्रोतुमिच्छामि बालाया वद मे प्रभो ।। १

श्रीमहेश्वर उवाच–
श्रीबालाकवचं देवि महाप्राणाधिकं परम् ।
वक्ष्यामि सावधाना त्वं शृणुष्वावहिता प्रिये ।। २

अरुण किरणजालैः रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता ।
इतरकरवराढ्या फुल्लकह्लारसंस्था
निवसतु हृदि बाला नित्यकल्याणशीला ।। ३

(ऐं) वाग्भवः पातु शीर्षे (क्लीं) कामराजस्तथा हृदि ।
सौः शक्तिबीजं मां पातु नाभौ गुह्ये च पादयोः ।। ४

ऐं क्लीं सौः वदने पातु बाला मां सर्वसिद्धये ।
हसकलह्रीं सौः पातु स्कन्धे भैरवी कण्ठदेशतः ।। ५

सुन्दरी नाभिदेशेऽव्याच्चर्चे कामकला सदा।
भ्रूनासयोरन्तराळे महात्रिपुरसुन्दरी ॥ ६

ललाटे सुभगा पातु भगा मां कण्ठदेशतः।
भगोदया तु हृदये उदरे भगसर्पिणी ॥ ७

भगमाला नाभिदेशे लिङ्गे पातु मनोभवा।
गुह्ये पातु महावीरा राजराजेश्वरी शिवा ॥ ८

चैतन्यरूपिणी पातु पादयोर्जगदम्बिका।
नारायणी सर्वगात्रे सर्वकार्यशुभङ्करी ॥ ९

ब्रह्माणी पातु मां पूर्वे दक्षिणे वैष्णवी तथा।
पश्चिमे पातु वाराही ह्युत्तरे तु महेश्वरी ॥ १०

आग्नेय्यां पातु कौमारी महालक्ष्मीश्च नैरऋते।
वायव्ये पातु चामुण्डा चेन्द्राणी पातु चेशके ॥ ११

जले पातु महामाया पृथिव्यां सर्वमङ्गळा।
स्कूलूरींमां सर्वतः पातु सकलह्रीं पातु सन्धिषु ॥ १२

जले स्थले तथाकाशे दिक्षु राजगृहे तथा।
क्षूं क्षें मां त्वरिता पातु सह्रीं सक्लीं मनोभवा ॥ १३

हंसः पायान्महादेवी परं निष्कलदेवता।

विजया मङ्गळा दूती कल्याणी भगमालिनी
ज्वालामालिनिनित्या च सर्वदा पातु मां शिवा ॥ १४

इत्येतत्कवचं देवि बालादेव्याः प्रकीर्तितम्।
सर्वस्वं मे तव प्रीत्या प्राणवद्रक्षितं कुरु ॥ १५

(श्रीरुद्रयामळे)

१. आकाशे पातु वरदा सर्वतो भुवनेश्वरी ॥ १२
इदं तु कवचं नाम देवानामपि दुर्लभम् ।
पठेत्प्रातः समुत्थाय शुचिः प्रयतमानसः ॥ १३
नामयो व्याधयस्तस्य न भयं च कचिद्भवेत् ।
न च मारीभयं तस्य पातकानां भयं तथा ॥ १४
न दारिद्र्यवशं गच्छेत्तिष्ठेन्मृत्युवशे न च ।
गच्छेच्छिवपुरं देवि सत्यं सत्यं वदाम्यहम् ॥ १५
यदिदं कवचं ज्ञात्वा श्री बालां यो जपेच्छिवे ।
स प्राप्नोति फलं सर्वं शिवसायुज्यसंभवम् ॥ १६ इति पाठः ॥

****

# श्री बालामन्त्रकवचस्तोत्रम् - ३

आधारे तरुणार्कबिम्बरुचिरं हेमप्रभाभास्वरं
बीजं मान्मथमिन्द्रगोपसदृशं हृत्पङ्कजे संस्थितम् ।
रन्ध्रे ब्रह्मपदं च शाक्तमपरं हेमप्रभाभास्वरं
ये ध्यायन्ति पदद्वयं तव शिवे ते यान्ति शैवं पदम् ॥

(एवं ध्यात्वा जपेद्धर्म सर्वकर्मसमृद्धये ।)
ऐंकारी मे शिरः पातु क्लींकारी हृदयं मम ।
सौः पातु पादयुग्मं मे सर्वाङ्गं सकलाऽवतु ॥ १

वाग्देवी मे शिरः पातु फालं कुमारिका ।
भ्रूयुग्मं शाङ्करी पातु श्रुतियुग्मं गिरीश्वरी ॥ २

नेत्रे त्रिनेत्रवरदा नासिकां मे महेश्वरी ।
औष्ठौ मे सुभगा पातु चुबुकं नववार्षिका ॥ ३

कपोले कमनीयाऽव्यात्कण्ठे कामार्चिताऽवतु ।
बाहू पातु वराभीति धारिणी सम्प्रदायिनी ॥ ४

वक्षस्त्रिकं च पद्माक्षी कुचौ काञ्चीनिवासिनी।
उदरे सुन्दरी पातु नाभिं नागेन्द्रवन्दिता॥ ५

पार्श्वे पाशवहा पातु पृष्ठं पापविनाशिनी।
कटिं कपूरहृद्देशी (विद्येशी) जघनं ललिताम्बिका॥ ६

मेढ्रं महेशरमणी पातु मां फाललोचना।
जानुनी जयदा पातु गुह्यं विद्याप्रदायिनी॥ ७

पादौ निशार्चिता पातु प्रपदं त्रिपुरेश्वरी।
सर्वाङ्गं सर्वदा पातु बाला त्रिपुरसुन्दरी॥ ८

वित्तं वित्तेश्वरी पातु पशून्पशुपति प्रिया।
पुत्रान् पुत्रप्रदा पातु दानधर्मप्रदायिनी॥ ९

क्षेत्रं क्षेत्रेशवनिता गेहं गम्भीरनादिनी।
पातु धर्ममयी सर्वं शर्वसर्वेश्वरी रमा॥ १०

इत्येतत्कवचं पुण्यं सर्वपापप्रणाशनम्।
सर्वसौभाग्यजनकं सर्वरोगनिबर्हणम्॥ ११

(विषज्वरहरं भूतवेतालादिनिबर्हणम्।
अपस्मार गदाशूल नेत्ररोगादिनाशनम्॥ १२

पठ्यमानं तु सततं बहुदुःखापहं नृणाम्।
जपेत्कुमारीकवचं त्रिकालेषु त्रिमासकम्॥ १३

मुच्यते सकलाद्रोगात् कञ्चुकादिव पन्नगः।
पठेद्यः प्रयतो वर्षं कुमारी तस्य सिद्धिदा॥ १४

गङ्गातरङ्गविलसच्छीकराक्तमुखाम्बुजा।
निष्कलङ्का प्रसन्नास्या सुधासिन्धुसमुज्ज्वला॥ १५

अनेकमन्त्रराजोऽयं अशेषं यो जपेन्नरः ।
तस्य संरक्षणं मन्त्रं वर्षमात्रस्य संशयः ॥ १६

प्रातः काले तु सलिलं ब्राह्मणः प्रयतः शुचिः ।
मन्त्रं जपन् त्रिरावृत्त्या वर्मसिद्धो भवेन्नरः ॥ १७

अस्य मन्त्रप्रभावेन व्याख्याता स भवेद्ध्रुवम् ।
यद्दुस्साध्यतमं कार्यं तत्तु साध्यं भवेज्जपात् ॥ १८

तत्तत्स्तोत्रेण लभते नात्र कार्या विचारणा ।
करस्थं काञ्चनं कृत्वा कवचं स महान्भवेत् ॥ १९

बहुनाऽत्र किमुक्तेन सर्वकार्येषु सर्वदा ।
यद्यदर्थे प्रयत्नः स्यात्तत्तदर्थमिदं जपेत् ॥) २०

****

## श्रीबाला दुःस्वप्ननाशककवचम् -४

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशाङ्कुशवराभीतीर्धारयन्तीं शिवां भजे ॥ १

पूर्वस्यां भैरवी पातु बाला मां पातु दक्षिणे ।
मालिनी पश्चिमे पातु वासिनी चोत्तरेऽवतु ॥ २

ऊर्ध्वं पातु महादेवी श्री बाला त्रिपुरेश्वरी ।
अधस्तात् पातु देवेशी पातालतलवासिनी ॥ ३

आधारे वाग्भवः पातु कामराजस्तथा हृदि ।
महाविद्या भगवती पातु मां परमेश्वरी ॥ ४

ऐं लं ललाटे मां पायात् ह्रौं ह्रीं हंसश्च नेत्रयोः ।
नासिका कर्णयोः पातु ह्रीं ह्रौं तु चिबुके तथा ॥ ५

सौः पातु मे हृदि गले ह्रीं ह्वः नाभिदेशके।
सौः क्लीं श्रीं गुह्यदेशे तु ऐं ह्रीं पातु च पादयोः ।। ६

ह्रीं क्लीं मां सर्वतः पातु सौः पायात् पदसन्धिषु।
जले स्थले तथा कोशे देवराजगृहे तथा।। ७

क्षें क्षें मां त्वरिता पातु मां चक्री सौः मनोभवा।
हंसौः पायात् महादेवी परं निष्कलदेवता।। ८

विजया मङ्गला दूती कल्पा मां भगमालिनी।
ज्वालामालिनी नित्या सर्वदा पातु मां शिवा।। ९

इतीदं कवचं देवि देवानामपि दुर्लभम्।
तव प्रीत्या समाख्यातं गोपनीयं प्रयत्नतः ।। १०

इदं रहस्यं परमं गुह्याद् गुह्यतरं प्रिये।
धन्यं प्रशस्यमायुष्यं भोगमोक्षप्रदं शिवम्।। ११

****

## श्रीबालात्रैलोक्यविजय कवचम्

श्रीभैरव उवाच–

अधुना ते प्रवक्ष्यामि कवचं मन्त्रविग्रहम्।
त्रैलोक्यविजयं नाम रहस्यं देवदुर्लभम्।। १

श्री देव्युवाच–

या देवी त्र्यक्षरी बाला चित्कला श्रीसरस्वती।
महाविद्येश्वरी नित्या महात्रिपुरसुन्दरी।। २

तस्याः कवचमीशान मन्त्रगर्भं परात्मकम्।
त्रैलोक्यविजयं नाम श्रोतुमिच्छामि तत्वतः ।। ३

श्रीभैरव उवाच -

देवदेवि महादेवि बालाकवचमुत्तमम्।
मन्त्रगर्भं परं तत्त्वं लक्ष्मीसंवर्धनं महत् (परम्) ।। ४

सर्वस्वं मे रहस्यं तु गुह्यं त्रिदशगोपितम्।
प्रवक्ष्यामि तव स्नेहान्नाख्येयं यस्य कस्यचित् ।। ५

(यद्धृत्वा कवचं देव्या मातृकाक्षरमण्डितम्।
नारायणोऽपि दैत्येन्द्रान् जघान रणमण्डले ।। ६

त्र्यम्बकं कामदेवोऽपि बलं शक्रो जघान हि।
कुमारस्तारकं दैत्यमन्धकं चन्द्रशेखरः ।। ७

अवधीद्रावणं रामो वातापिं कुम्भसम्भवः ।
कवचस्यास्य देवेशि धारणात्पठनादपि ।। ८

स्रष्टा प्रजापतिर्ब्रह्मा विष्णुस्त्रैलोक्यपालकः ।
शिवोऽणिमादिसिद्धीशो मघवान् देवनायकः ।। ९

सूर्यस्तेजोनिधिर्देवि चन्द्रस्ताराधिपः स्थितः ।
वह्निर्महोर्मिनिलयो वरुणोऽपि दिशां पतिः ।। १०

समीरो बलवांल्लोके यमो धर्मनिधिः स्मृतः ।
कुबेरो निधिनाथोऽस्ति नैर्ऋतिः सर्वराक्षसाम् ।। ११

ईश्वरः शङ्करो रुद्रो देवि रत्नाकरोऽम्बुधिः ।
अस्य स्मरणमात्रेण कुले तस्य कुलेश्वरि ।। १२

आयुः कीर्तिः प्रभा लक्ष्मीर्वृद्धिर्भवति संततम्।
कवचं सुभगं देवि बालायाः कौलिकेश्वरि ।।) १३

ऋषिः स्याद्दक्षिणामूर्तिः पङ्क्तिश्छन्द उदाहृतः ।
बाला सरस्वती देवि देवता त्र्यक्षरी स्मृता ।। १४

बीजं तु वाग्भवं प्रोक्तं शक्तिः शक्तिरुदाहृता।
कीलकं कामराजं तु फडाशाबन्धनं तथा।। १५

भोगापवर्गसिद्ध्यर्थं विनियोगः प्रकीर्तितः।
अकुलकुलमयन्ती चक्रमध्ये स्फुरन्ती
मधुरमधु पिबन्ती कण्टकान् भक्षयन्ती।
दुरितमपहरन्ती साधकान् पोषयन्ती
जयतु जयतु बाला सुन्दरी क्रीडयन्ती।।

ऐं बीजं मे शिरः पातु क्लीं बीजं भ्रुकुटीं मम।
सौः भालं पातु मे बाला ऐं क्लीं सौः नयने मम।। १

अं आं इं ईं श्रुती पातु बाला पञ्चाक्षरी मम।
उं ऊं ऋं ॠं सदा पातु मम नासापुटद्वयम्।। २

लृं लॄं एं ऐं पातु गण्डौ ऐं क्लीं सौः त्रिपुराम्बिका।
ओं औं अं अः मुखं पातु सौः क्लीं ऐं त्रिपुरेश्वरी।। ३

कं खं गं घं ङं करौ मे सौः क्लीं ऐं भगमालिनी।
चं छं ज झं ञं मे पातु बाहू सौः सर्वसिद्धिदा।। ४

टं ठं डं ढं णं मे पातु वक्षः क्लीं वीरनायिका।
तं थं दं धं नं मे पातु ऐं कुक्षौ कुलनायिका।। ५

पं फं बं भं मं मे पातु पार्श्वौ परमसुन्दरी।
यं रं लं वं पातु पृष्ठं सौः क्लीं ऐं विश्वमातृका।। ६

शं षं सं हं पातु नाभिं सौः सौःसौः त्रिगुणात्मिका।
लं क्षं कटिं सदा पातु क्लीं क्लीं क्लीं मातृकेश्वरी।। ७

ऐं ऐं ऐं पातु लिङ्गं मे भगलिङ्गामृतेश्वरी।
ऐं क्लीं गुह्यं सदा पातु भगलिङ्गस्वरूपिणी।। ८

सौः ऐं ऊरू सदा पातु वेदमाताऽष्टसिद्धिदा।
सौः ऐं जानु सदा पातु महामुद्राभिमुद्रिता॥ ९

सौः ऐं क्लीं पातु मे जङ्घे बाला त्रिभुवनेश्वरी।
ऐं ऐं सौः सौः पातु गुल्फौ त्रैलोक्यविजयप्रदा॥ १०

ऐं ऐं क्लीं क्लीं पातु पादौ बाला त्र्यक्षररूपिणी।
शिरसः पादपर्यन्तं सर्वावयवसंयुतम्॥ ११

पायात्पादादि शीर्षान्तं ऐं क्लीं सौः सकलं वपुः।
ब्राह्मी मां पूर्वतः पातु वह्नौ नारायणी तथा॥ १२

माहेश्वरी दक्षिणेऽव्यान्नैर्ऋत्ये चण्डिकाऽवतु।
पश्चिमे पातु कौमारी वायव्ये चापराजिता॥ १३

वाराही तूत्तरे पायादीशान्यां नारसिंहका।
प्रभाते भैरवी पातु मध्याह्ने योगिनी क्रमात्॥ १४

सायं मां वटुकः पायादर्द्धरात्रे शिवोऽवतु।
निशान्ते सर्वगा पातु सर्वदा चक्रनायिका॥ १५

रणे राजकुले द्यूते विवादे शत्रुसङ्कटे।
सर्वत्र सर्वतः पातु ऐं क्लीं सौः बीजभूषिता॥ १६

इतीदं कवचं दिव्यं बालायाः सारमुत्तमम्।
मन्त्रविद्यामयं तत्त्वं मातृकाक्षरभूषितम्॥ १७

ब्रह्मविद्यामयं ब्रह्मसाधनं मन्त्रसाधनम्।
यः पठेत्सततं भक्त्या धारयेद्वा महेश्वरि॥ १८

तस्य सर्वार्थसिद्धिः स्यात् साधकस्य न संशयः।
रवौ भूर्जे लिखित्वेदं अर्चयेद्धारयेत्ततः॥ १९

वन्ध्यापि काकवन्ध्यापि मृतवत्सापि पार्वति।
लभेत्पुत्रान् महावीरान् मार्कण्डेयसमायुषः ॥ २०

वित्तं दरिद्रो लभते मतिमानयशः श्रियः।
य एतद्धारयेद्धर्म संग्रामे स रिपून् जयेत् ॥ २१

जित्वा वैरिकुलं घोरं कल्याणं गृहमाविशेत्।
बाहौ कण्ठे तथा देवि धारयेन्मूर्ध्नि संततम् ॥ २२

इह लोके धनारोग्यं परमायुर्यशः श्रियम्।
प्राप्य भक्त्या नरो भोगानन्ते याति परं पदम् ॥ २३

इदं रहस्यं परमं सर्वतत्त्वेषु ह्युत्तमम्।
गुह्याद्गुह्यमिमं नित्यं गोपनीयं स्वयोनिवत् ॥ २४

(रुद्रयामले)

१-१६ श्लोकेषु पाठभेदः –

अं आं इं ईं श्रुती पातु बाला कामेश्वरी मम।
उं ऊं ऋं ॠं सदा पातु मम नासापुटद्वयम् ॥ २

लृं ॡं एं ऐं पातु गण्डौ ऐं क्लीं सौः त्रिपुराम्बिका।
ओं औं अं अः मुखं पातु क्लींऐं सौः त्रिपुरेश्वरी ॥ ३

कं खं गं घं ङं करौ मे सौः ऐं क्लीं शत्रुमर्दिनी।
चं छं जं झं ञं पातु मे कुक्षिं ऐं कुलनायिका ॥ ४

टं ठं डं ढं णं पातु मे वक्षः क्लीं भगमालिनी।
तं थं दं धं नं पातु मे बाहू सौः जयदायिनी ॥ ५

पं फं बं भं मं मे पातु पार्श्वे परमसुन्दरी।
यं रं लं वं पातु पृष्ठं ऐं क्लीं सौः विश्वमातृका ॥ ६

शं षं सं हं पातु नाभिं भगवत्यमृतेश्वरी।

ळं क्षं कटिं सदा पातु क्लीं क्लीं क्लीं मातृकेश्वरी ।। ७

ऐं ऐं ऐं पातु मे लिङ्गं भगं मे भगगर्भिणी ।
सौः सौः सौः पातु मे ऊरू वीरमाताऽष्टसिद्धिदा ।। ८

सौः ऐं क्लीं जानू मे पातु महामुद्राभिमुद्रिता ।
सौः क्लीं ऐं पातु मे जङ्घे वाला त्रिभुवनेश्वरी ।। ९

क्लीं ऐं सौः पातु गुल्फौ मे त्रैलोक्यविजयप्रदा ।
ऐं क्लीं सौः पातु मे पादौ वाला त्र्यक्षररूपणी ।। १०

शीर्षादिपादपर्यन्तं सर्वावयवसंयुतम् ।
पायात्पाय्वादि शीर्षाङ्गं ऐं क्लीं सौः सकलं वपुः ।। ११

ब्राह्मी मां पूर्वतः पातु वह्नौ वाराहिकाऽवतु ।
महेश्वरी दक्षिणे च इन्द्राणी पातु नैरृतौ ।। १२

पश्चिमे पातु कौमारी वायव्ये चण्डिकाऽवतु ।
वैष्णवी पातु कौवेर्यां ईशान्यां नारसिंहिका ।। १३

प्रभाते भैरवी पातु मध्याह्ने योगिनी तथा ।
सायाह्ने वटुका पातु अर्धरात्रे शिवाऽवतु ।। १४

निशान्ते सर्वगा पातु सर्वदा चक्रनायिका ।
रणे नागकुले द्यूते विवादे शत्रुसङ्कटे ।। १५

सर्वत्र सर्वदा पातु ऐं क्लीं सौः बीजभूषिता ।

****

# श्री दशविद्यामयीबाला स्तोत्रम्

श्री काली बगलामुखी च ललिता धूम्रावती भैरवी
मातङ्गी भुवनेश्वरी च कमला श्रीर्वज्रवैरोचनी ।
तारापूर्वमहापदेन कथिता विद्या स्वयं शम्भुना
लीला रूपमयी च देशदशधा बाला तु मां पातु सा ।। १

श्यामां श्यामघनावभासरुचिरां नीलालकालङ्कृतां
बिम्बोष्ठीं बलिशत्रुवन्दितपदां बालार्ककोटिप्रभाम्।
त्रासत्रासकृपाणमुण्डदधतीं भक्ताय दानोद्यतां
वन्दे सङ्कटनाशिनीं भगवतीं बालां स्वयं कालिकाम्।। २

ब्रह्मास्त्रां सुमुखीं बकारविभवां बालां बलाकीनिभां
हस्तन्यस्तसमस्तवैरिरसनामन्ये दधानां गदाम्।
पीतां भूषणगन्धमाल्यरुचिरां पीताम्बराङ्गां वरां
वन्दे सङ्कटनाशिनीं भगवतीं बालां च बगलामुखीम्।। ३

बालार्क द्युतिभास्करां त्रिनयनां मन्दस्मितां सन्मुखीं
वामे पाशधनुर्धरां सुविभवां बाणं तथा दक्षिणे।
पारावारविहारिणीं परमयीं पद्मासने संस्थितां
वन्दे सङ्कटनाशिनीं भगवतीं बालां स्वयं षोडशीम्।। ४

दीर्घां दीर्घकुचामुदग्रदशनां दुष्टच्छिदां देवतां
क्रव्यादां कुटिलेक्षणां च कुटिलां काकध्वजां क्षुत्कृशाम्।
देवीं शूर्पकरां मलीनवसनां तां पिप्पलादार्चितां
बालां सङ्कटनाशिनीं भगवतीं ध्यायामि धूमावतीम्।। ५

उद्यत् कोटिदिवाकरप्रतिभटां बालार्कभाकर्पटां
मालापुस्तकपाशमङ्कुशवरान्दैत्येन्द्रमुण्डस्रजाम्।
पीनोत्तुङ्गपयोधरां त्रिनयनां ब्रह्मादिभिः संस्तुतां
बालां सङ्कटनाशिनीं भगवतीं श्रीभैरवीं धीमहि।। ६

वीणावादनतत्परां त्रिनयनां मन्दस्मितां सन्मुखीं
वामे पाशधनुर्धरां तु निकरे बाणं तथा दक्षिणे।
पारावारविहारिणीं परमयीं ब्रह्मासने संस्थितां
वन्दे सङ्कटनाशिनीं भगवतीं मातङ्गिनीं बालिकाम्।। ७

उद्यत्सूर्यनिभां च इन्दुमुकुटामिन्दीवरे संस्थितां
हस्ते चारुवराभयं च दधतीं पाशं तथा चाङ्कुशम्।
चित्रालङ्कृतमस्तकां त्रिनयनां ब्रह्मादिभिः सेवितां
वन्दे सङ्कटनाशिनीं च भुवनेशीमादिबालां भजे ॥ ८

देवीं काञ्चनसन्निभां त्रिनयनां फुल्लारविन्दस्थितां
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलाम्।
प्रालेयाचलसन्निभैश्च करिभिरासिञ्च्यमानां सदा
बालां सङ्कटनाशिनीं भगवतीं लक्ष्मीं भजे चेन्दिराम्॥ ९

सञ्छिन्नं स्वशिरो विकीर्णकुटिलं वामे करे बिभ्रतीम्
तृप्तास्यां स्वशरीरजैश्च रुधिरैः सन्तर्पयन्तीं सखीम्।
सद्भक्ताय वरप्रदाननिरतां प्रेतासनाध्यासिनीं
बालां संकटनाशिनीं भगवतीं श्रीच्छिन्नमस्तां भजे ॥ १०

उग्रामेकजटामनन्तसुखदां दूर्वादलाभामजां
कर्त्रीखड्गकपालनीलकमलान् हस्तैर्वहन्तीं शिवाम्।
कण्ठे मुण्डस्रजं करालवदनां कञ्जासने संस्थितां
वन्दे संकटनाशिनीं भगवतीं बालां स्वयं तारिणीम्॥ ११

मुखे श्री मातङ्गी तदनु किल तारा च नयने
तदन्तङ्गा काली भ्रुकुटिसदने भैरविपरा।
कटौ छिन्ना धूमावति जय कुचे श्रीकमलजा
पदांशे ब्रह्माख्या जयति किल बाला दशमयी ॥ १२

विराजन्मन्दारद्रुम कुसुमहारस्तनतटी
परित्रासत्राण स्फटिकगुटिका पुस्तकवरा।
गले रेखास्तिस्रो गमकगतिगीतैकनिपुणा
सदा पीता हाला जयति किल बाला दशमयी ॥ १३

(मेरुतन्त्रे)

# श्रीबालाकर्पूरस्तोत्रम्

कर्पूराभेन्दुगौरां शशिसकलधरां रक्तपद्मासनस्थां
विद्यापात्राक्षमुद्राधृतकरकमलां त्वां स्मरन्सन् त्रिलक्षम्।
जप्त्वा चन्द्रार्धभूषं सुरुचिरमधरं बीजमाद्यं तवेदं
हुत्वा पश्चात्पलाशैः स भवति कविराड् देवि बाले महेशि ।। १

हस्ताब्जैः पात्रपाशाङ्कुशकुसुमधनुर्बीजपूरान्दधानां
रक्तां त्वां संस्मरन्सन् प्रजपति मनुजो यस्त्रिलक्षं भवानि।
वामाक्षी चन्द्रसंस्थं क्षितिसहितविधिं कामबीजं तवेदं
चन्द्रैर्हुत्वा दशांशं स नयति सकलान् वश्यतां सर्वदैव ।। २

विद्याक्षज्ञानमुद्राऽमृतकलशधरां त्वां मनोज्ञां किशोरीं
स्मेरां ध्यायंस्त्रिनेत्रां शशधरधवलां यो जपेद्वै त्रिलक्षम्।
जीवं सङ्कर्षणाढ्यं तव सुरनमिते सर्गयुक्तं सुबीजं
हुत्वाऽन्ते मालतीभिर्भवति स ललिते श्रीयुतो भोगवांश्च ।। ३

ध्यायंस्त्वां पुस्तकाक्षाभयवरदकरां लोहिताभां कुमारीं
कश्चिद्यः साधकेन्द्रो जपति कुलविधौ प्रत्यहं षट्सहस्रम्।
मातर्वाङ्मारशक्तिप्रयुतमनुमिमं त्र्यक्षरं त्रैपुरं ते
भुक्त्वा भोगाननेकान् जननि स लभतेऽवश्यमेवाष्टसिद्धीः ।। ४

आरक्तां कान्तदोर्भ्यां मणिचषकमथो रत्नपद्मं दधानां
वाग्मायाश्रीयुतान्यं मनुमयि ललिते तत्त्वलक्षं जपेद्यः।
ध्यायन् रूपं त्वदीयं तदनु च हवनं पायसान्नैः प्रकुर्याद्
योगीशस्तत्त्ववेत्ता परशिवमहिले भूतले जायते सः।। ५

वाणी चेटी रमा वाग्भवमथ मदनः शक्तिबीजं च षड्भिः
एतैश्चन्द्रार्धचूडे भवति तव महामन्त्रराजः षडर्णः।

जप्त्वैनं साधको यः स्मरहरदयिते भक्तितस्त्वामुपास्ते
विद्यैश्वर्याणि भुक्त्वा तदनु स लभते दिव्यसायुज्यमुक्तिम् ।।६

महाबिन्दुः शुद्धो जननि नवयोन्यन्तरगतो
भवेदेतद्बाह्ये वसुछदनपद्मं सुरुचिरम् ।
ततो वेदद्वारं भवति तव यन्त्रं गिरिसुते
तदस्मिन् त्वां ध्यायेत् कहरिहररुद्रेश्वरपदाम् ।। ७

नवीनादित्याभां त्रिनयनयुतां स्मेरवदनां
महाक्षस्रग्विद्याऽभयवरकरां रक्तवसनाम् ।
किशोरीं त्वां ध्यायन्निजहृदयपद्मे परशिवे
जपेन्मोक्षाप्त्यर्थं तदनु जुहुयात् किंशुकसुमैः ।। ८

हृदम्भोजे ध्यायन् कनकसदृशामिन्दुमुकुटां
त्रिनेत्रां स्मेरास्यां कमलमधुलुङ्गाङ्कितकराम् ।
जपेद्दिग्लक्षं यस्तव मनुमयो देवि जुहुयात्
सुपक्वैर्मालूरैरतुलधनवान् स प्रभवति ।। ९

स्मरेद्धस्तैर्वेदाभयवरसुधाकुम्भधरिणीं
स्रवन्तीं पीयूषं धवलवसनामिन्दुशकलाम् ।
सुविद्याप्त्यै मन्त्रं तव हरनुते लक्षनवकं
जपेत्त्वां कर्पूरैरगरु सहितैरेव जुहुयात् ।। १०

सहस्रारे ध्यायन् शशधरनिभां शुभ्रवसनां
अकारादिक्षान्तावयवयुतरूपां शशिधराम् ।
जपेद् भक्त्या मन्त्रं तव रससहस्रं प्रतिदिनं
तथारोग्याप्त्यर्थं भगवति गुडूच्यैः प्रजुहुयात् ।। ११

कुलज्ञः कश्चिद्यो यजति कुलपुष्पैः कुलविधौ
कुलागारे ध्यायन् कुलजननि ते मन्मथकलाम् ।

षडर्णं पूर्वोक्तं जपति कुलमन्त्रं तव शिवे
स जीवन्मुक्तः स्यादकुलकुलपङ्केरुहगते ।। १२

शिवे मद्यैर्मांसैश्चणकवटकैर्मीनसहितैः
प्रकुर्वंश्चक्रार्चां सुकुलभगलिङ्गामृतरसैः ।
बलिं शङ्कामोहादिकपशुगणान्यो विदधति
त्रिकालज्ञो ज्ञानी स भवति महाभैरवसमः ।। १३

मनोवाचागम्यामकुलकुलगम्यां परशिवाम्
स्तवीमि त्वां मातः कथमहमहो देवि जडधीः ।
तथापि त्वद्भक्तिर्मुखरयति मां तद्विरचितं
स्तवं क्षन्तव्यं मे त्रिपुरललिते दोषमधुना ।। १४

अनुष्ठानध्यानार्चामनु समुद्धारणयुतं
शिवे ते कर्पूरस्तवमिति पठेदर्चनपरः ।
स योगी भोगी स्यात् स हि निखिलशास्त्रेषु निपुणः
यमोऽन्यो वैरीणां विलसति सदा कल्पतरुवत् ।। १५

बालां बालदिवाकरद्युतिनिभां पद्मासने संस्थितां
पञ्चप्रेतमयाम्बुजासनगतां वाग्वादिनीरूपिणीम् ।
चन्द्रार्कानलभूषितत्रिनयनां चन्द्रावतंसान्विताम्
विद्याक्षाभयधारिणीं वरकरां वन्दे परामम्बिकाम् ।। १६

(श्री परातन्त्रे)

****

# श्रीबालास्तवराजः

ॐ अस्य श्री बालास्तवराजस्तोत्रस्य श्री मृत्युञ्जय ऋषिः । ककुप्छन्दः । श्री बाला देवता । क्लीं बीजं । सौः शक्तिः । ऐं कीलकम् । भोगमोक्षार्थे जपे विनियोगः ।

त्रिबीजभाजायुक्तेन कराङ्गौ न्यासमाचरेत्।
ध्यानं ततः शृणुष्वाशु सर्वैश्वर्यप्रदायकम्॥ १

अक्षपुस्तधरां रक्तां वराभयकराम्बुजाम्।
चन्द्रमुण्डां त्रिनेत्रां च ध्यायेद्बालां फलप्रदाम्॥ २

ऐं त्रैलोक्यविजयायै हुँ फट्। क्लीं त्रिगुणरहितायै हुँ फट्।
सौः सर्वैश्वर्यदायिन्यै हुँ फट्।

नातः परतरा सिद्धिर्नातः परतरा गतिः।
नातः परतरो मन्त्रस्सत्यं सत्यं वदाम्यहम्॥ ३

रक्तां रक्तच्छदां तीक्ष्णां रक्तपां रक्तवाससीम्।
स्वरूपां रत्नभूषां च ललज्जिह्वां परां भजे॥ ४

त्रैलोक्यजननीं सिद्धां त्रिकोणस्थां त्रिलोचनाम्।
त्रिवर्गफलदां शान्तां वन्दे बीजत्रयात्मिकाम्॥ ५

श्रीबालां वारुणीप्रीतां बालार्ककोटिद्योतिनीम्।
वरदां बुद्धिदां श्रेष्ठां वामाचारप्रियां भजे॥ ५

चतुर्भुजां चारुनेत्रां चन्द्रमौलिं कपालिनीम्।
चतुःषष्टियोगिनीशां वीरवन्द्यां भजाम्यहम्॥ ६

कौलिकां कलतत्वस्थां कौलाबाराङ्कवाहनाम्।
कौसुम्भवर्णां कौमारीं कवर्मधारिणीं भजे॥ ७

द्वादशस्वररूपायै नमस्तेऽस्तु नमो नमः।
नमो नमस्ते बालायै कारुण्यायै नमो नमः॥ ८

विद्याविद्याद्यविद्यायै नमस्तेऽस्तु नमो नमः।
विद्याराज्ञ्यै महादेव्यै शिवायै सततं नमः॥ ९

ऐं बालायै विद्महे क्लीं त्रिभुवनेश्वर्यै धीमहि।
सौः तन्नो देवी प्रचोदयात्। ऐं बालायै स्वाहा।। १०

द्वादशान्तालयां श्रेष्ठां षोडशाधारगां शिवाम्।
पञ्चेन्द्रियस्वरूपाख्यां भूयो भूयो नमाम्यहम्।। ११

ब्रह्मविद्यां ब्रह्मरूपां ब्रह्मज्ञानप्रदायिनीम्।
वसुप्रदां वेदरूपां वन्दे बालां शुभाननाम्।। १२

अघोरां भीषणामाद्यामनन्तोपरिसंस्थिताम्।
देवदेवेश्वरीं भद्रां श्रीबालां प्रणमाम्यहम्।। १३

भवप्रियां भवाधारां भगरूपां भगप्रियाम्।
भयानकां भूतधात्रीं भूदेवपूजितां भजे।। १४

अकारादिक्षकारान्तां क्लीबाक्षरात्मिकां पराम्।
वन्दे वन्दे महामायां भवभव्यभयापहाम्।। १५

नाडीरूप्यै नमस्तेऽस्तु धातुरूप्यै नमो नमः।
जीवरूप्यै नमस्यामि ब्रह्मरूप्यै नमो नमः।। १६

नमस्ते मन्त्ररूपायै पीठगायै नमो नमः।
सिंहासनेश्वरि तुभ्यं सिद्धिरूप्यै नमो नमः।। १७

नमस्ते मातृरूपिण्यै नमस्ते भैरवप्रिये।
नमस्ते चोपपीठायै बालायै सततं नमः।। १८

योगेश्वर्यै नमस्तेऽस्तु योगदायै नमो नमः।
योगनिद्रास्वरूपिण्यै बालादेव्यै नमो नमः।। १९

सुपुण्यायै नमस्तेऽस्तु सुशुद्धायै नमो नमः।
सुगुह्यायै नमस्तेऽस्तु बालादेव्यै नमो नमः।। २०

इतीदं स्तवराजाख्यं सर्वस्तोत्रोत्तमोत्तमम्।
ये पठन्ति महेशानि पुनर्जन्म न विद्यते ।। २१

सर्वपापहरं पुण्यं सर्वस्फोटविनाशकम्।
सर्वसिद्धिप्रदं श्रेष्ठं भोगैश्वर्यप्रदायकम् ।। २२

****

# श्री बालामकरन्दस्तवः

श्रीरुद्र उवाच—

शृणु देवि प्रवक्ष्यामि मकरन्दस्तवं शुभम्।
गोप्याद्गोप्यतरं गोप्यं महाकौतूहलं परम् ।। १

बालायाः परमेशान्याः स्तोत्रचूडामणिः शिवे।
मकरन्दस्य स्तोत्रस्य ऋषिर्नारदसंज्ञकः ।। २

छन्दोऽनुष्टुपुदाख्यातं श्रीबाला देवता स्मृता।
ऐं बीजं शक्तिः सौः प्रोक्तं कीलकं क्लीं तथैव च ।। ३

भोगमोक्षस्य सिद्ध्यर्थे विनियोगः प्रकीर्तितः।
नमस्तेऽस्तु परां शक्तिं नमस्ते भक्तवत्सले ।। ४

नमस्तेऽस्तु गुणातीतां बालां सिद्धिप्रदाम्बिकाम्।
भवदुःखाब्धितरणीं परं निर्वाणदायिनीम् ।। ५

धनदां ज्ञानदां सत्यां श्रीबालां प्रणमाम्यहम्।
सिद्धिप्रदां ज्ञानरूपां चतुर्वर्गफलप्रदाम् ।। ६

आधिव्याधिहरां वन्दे श्रीबालां परमेश्वरीम्।
ऐङ्काररूपिणीं भद्रां क्लींकारगुणसम्भवाम् ।। ७

सौःकाररूपरूपेशीं बालां बालार्कसन्निभाम्।
ऊर्ध्वाम्नायेश्वरीं देवीं रक्तां रक्तविलेपनाम् ।। ८

रक्तवस्त्रधरां सौम्यां श्रीबालां प्रणमाम्यहम्।
राजराजेश्वरीं देवीं रजोगुणात्मिकां भजे।। ९

ब्रह्मविद्यां महामायां त्रिगुणात्मकरूपिणीम्।
पञ्चप्रेतासनस्थां च पञ्चमकारभक्षकाम्।। १०

पञ्चभूतात्मिकां चैव नमस्ते करुणामयीम्।
सर्वदुःखहरां दिव्यां सर्वसौख्यप्रदायिनीम्।। ११

सिद्धिदां मोक्षदां भद्रां श्रीबालां भावयाम्यहम्।
नमस्तस्यै महादेव्यै देवदेवेश्वरि परे।। १२

सर्वोपद्रवनाशिन्यै बालायै सततं नमः।
गुह्याद्गुह्यतरां गुप्तां गुह्येशीं देवपूजिताम्।। १३

हरमौलिस्थितां देवीं बालां वाक्सिद्धिदां शिवाम्।
व्रणहां सोमतिलकां सोमपानरतां पराम्।। १४

सोमसूर्याग्निनेत्रां च वन्देऽहं हरवल्लभाम्।
अचिन्त्याकाररूपाख्यां ओङ्काराक्षररूपिणीम्।। १५

त्रिकालसन्ध्यारूपाख्यां भजामि भक्ततारिणीम्।
कीर्तिदां योगदां रादां सौख्यनिर्वाणदां तथा।। १६

मन्त्रसिद्धिप्रदामीडे सृष्टिस्थित्यन्तकारिणीम्।
नमस्तुभ्यं जगद्धात्रि जगत्तारिणि चाम्बिके।। १७

सर्ववृद्धिप्रदे देवि श्रीविद्यायै नमोऽस्तु ते।
दयारूप्यै नमस्तेऽस्तु कृपारूप्यै नमोऽस्तु ते।। १८

शान्तिरूप्यै नमस्तेऽस्तु धर्मरूप्यै नमो नमः।
पूर्णब्रह्मस्वरूपिण्यै नमस्तेऽस्तु नमो नमः।। १९

ज्ञानार्णवायै सर्वायै नमस्तेऽस्तु नमो नमः ।
पूतात्मायै परात्मायै महात्मायै नमो नमः ।। २०

आधारकुण्डलीदेव्यै भूयो भूयो नमाम्यहम् ।
षट्चक्रभेदिनी पूर्णा षडाम्नायेश्वरी परा ।। २१

परापरात्मिका सिद्धा श्रीबाला शरणं मम ।
इदं श्री मकरन्दाख्यं स्तोत्रं सर्वागमोक्तकम् ।। २२

स्तोत्रराजमिदं देवि धारय त्वं कुलेश्वरि ।
पुण्यं यशस्यमायुष्यं देवानामपि दुर्लभम् ।
पाठमात्रेण देवेशि सर्वारिष्टं विनश्यति ।। २३

(रुद्रयामलतः)

****

## श्रीबालाभुजङ्गस्तोत्रम्

श्रीनीललोहित उवाच–

जगद्योनिरूपां सुवेशीं च रक्तां गुणातीतसंज्ञां महागुह्यगुह्याम् ।
महासर्पभूषां भवेशादिपूज्यां महात्युग्रबालां भजेऽहं हि नित्याम् ।। १

महास्वर्णवर्णां शिवपृष्ठसंस्थां महामुण्डमालां गले शोभमानाम् ।
महाचर्मवस्त्रां महाशङ्खहस्तां महात्युग्रबालां भजेऽहं हि नित्याम् ।। २

सदा सुप्रसन्नां भृतासूक्ष्मसूक्ष्मां वराभीतिहस्तां धृतावाक्षपुस्ताम् ।
महाकिन्नरेशीं भगाकारबिद्यां महात्युग्रबालां भजेऽहं हि नित्याम् ।। ३

तिनीं तीकिनीनां रवां किङ्किणीनां हहाहा हहाहा महालापशब्दाम् ।
तथैथै तथैथै महानृत्यनृत्यां महात्युग्रबालां भजेऽहं हि नित्याम् ।। ४

ननानाना रिरीरी महागीश शम्बू हुहूवू हुहूवू पशो रक्तपानाम्।
धिमिन्धीं धिमिन्धीं मृदङ्गस्य शब्दां महात्युग्रबालां भजेऽहं हि
नित्याम्॥

महाचक्रसंस्थां त्रिमात्रास्वरूपां शिवार्धाङ्गभूतां महापुष्पमालाम्।
महादुःखहर्त्रीं महाप्रेतसंस्थां महात्युग्रबालां भजेऽहं हि नित्याम्॥ ६

स्फुरत्पद्मवक्त्रां हिमांशोः कलापां महाकोमलाङ्गीं सुरेशेन
मान्याम्।
जगत्पालनैकाग्रचित्तां सुपुष्टां महात्युग्रबालां भजेऽहं हि नित्याम्॥ ७

महादैत्यनाशीं सुरानित्यपालीं महाबुद्धिराशिं कवीनां मुखस्थाम्।
जटीनां हृदिस्थां मनूनां शिरःस्थां महात्युग्रबालां भजेऽहं हि
नित्याम्॥ ८

भुजङ्गाख्यं महास्तोत्रं त्रिषु लोकेषु दुर्लभम्।
महासिद्धिप्रदं दिव्यं चतुर्वर्गफलप्रदम्॥ ९

सर्वक्रतुफलं भद्रे सर्वव्रतफलं तथा।
सर्वदानोद्भवं पुण्यं लभते नात्र संशयः॥ १०

विवादे कलहे घोरे महादुःखे पराजये।
ग्रहदोषे महारोगे पठेत्स्तोत्रं विचक्षणः॥ ११

सर्वदोषाः विनश्यन्ति लभते वाञ्छितं फलम्।
दूतीयागे पठेद्देवि सर्वशत्रुक्षयो भवत्॥ १२

महाचक्रे पठेद्देवि लभते परं पदम्।
पूजान्ते पठते भक्त्या महाबलिफलप्रदम्॥ १३

पितृगेहे तुर्यपथे शून्यागारे शिवालये।
बिल्वमूले चैकवृक्षे रतौ मधुसमागमे॥ १४

पठेत्स्तोत्रं महेशानि जीवन्मुक्तस्स उच्यते।
त्रिकालं पठते नित्यं देवीपुत्रत्वमाप्नुयात्॥ १५

(श्रीकालानलतन्त्रतः)

# श्री बालामुक्तावलीस्तोत्रम्

बालार्ककोटिरुचिरां कोटिब्रह्माण्डभूषिताम्।
कन्दर्पकोटिलावण्यां बालां वन्दे शिवप्रियाम्।। १

वह्निकोटिप्रभां सूक्ष्मां कोटिकोटि सहेलिनीम्।
वरदां रक्तवर्णां च बालां वन्दे सनातनीम्।। २

ज्ञानरत्नाकरां भीमां परब्रह्मावतारिणीम्।
पञ्चप्रेतासनगतां बालां वन्दे गुहाशयाम्।। ३

पराप्रासादमूर्ध्निस्थां पवित्रां पात्रधारिणीम्।
पशुपाशच्छिदां तीक्ष्णां बालां वन्दे शिवासनाम्।। ४

गिरिजां गिरिमध्यस्थां गीःरूपां ज्ञानदायिनीम्।
गुह्यतत्वपरां चाद्यां बालां वन्दे पुरातनीम्।। ५

बौद्धकोटिसुसौन्दर्यां चन्द्रकोटिसुशीतलाम्।
आशावासां परां देवीं वन्दे बालां कपर्दिनीम्।। ६

सृष्टिस्थित्यन्तकारिणीं त्रिगुणात्मकरूपिणीम्।
कालग्रसनसामर्थ्यां बालां वन्दे फलप्रदाम्।। ७

यज्ञनाशीं यज्ञदेहां यज्ञकर्मशुभप्रदाम्।
जीवात्मविश्वजननीं बालां वन्दे परात्पराम्।। ८

इत्येतत् परमं गुह्यं नाम्ना मुक्तावलीस्तवम्।
ये पठन्ति महेशानि फलं वक्तुं न शक्यते।। ९

गुह्याद्गुह्यतरं गुह्यं महागुह्यं वरानने।
विद्यार्थी लभते विद्यां धनार्थी मोक्षमाप्नुयात्।। १०

कन्यार्थी लभते कन्यां मोक्षार्थी मोक्षमाप्नुयात्।
बहुनात्र किमुक्तेन चिन्तामणिरिवापरम्॥ ११

गोपनीयं प्रयत्नेन गोपनीयं न संशयः।
अन्येभ्यो नैव दातव्यं किमन्यच्छ्रोतुमिच्छसि॥ १२

(श्रीविष्णुयामले)

****

# श्रीबालामन्त्रसिद्धिस्तवः

ब्राह्मीरूपधरे देवि ब्रह्मात्मा ब्रह्मपालिका।
विद्यामन्त्रादिकं सर्वं सिद्धिं देहि परेश्वरि॥ १

महेश्वरी महामाया मानन्दा मोहहारिणी।
मन्त्रसिद्धिफलं देहि महामन्त्रार्णवेश्वरि॥ २

गुह्येश्वरी गुणातीता गुह्यतत्वार्थदायिनी।
गुणत्रयात्मिका देवी मन्त्रसिद्धिं ददस्व माम्॥ ३

नारायणी च नाकेशी नृमुण्डमालिनी परा।
नानानना नाकुलेशी मन्त्रसिद्धिं प्रदेहि मे॥ ४

घृष्टिचक्रा महारौद्री घनोपमविवर्णका।
घोरघोरतरा घोरा मन्त्रसिद्धिप्रदा भव॥ ५

शक्राणी सर्वदैत्यघ्नी सहस्रलोचनी शुभा।
सर्वारिष्टविनिर्मुक्ता सा देवी मन्त्रसिद्धिदा॥ ६

चामुण्डारूपदेवेशी चलज्जिह्वा भयानका।
चतुष्पीठेश्वरी देहि मन्त्रसिद्धिं सदा मम॥ ७

लक्ष्मीलावण्यवर्णा च रक्ता रक्तमहाप्रिया।
लम्बकेशा रत्नभूषा मन्त्रसिद्धिं सदा दद ।। ८

बाला वीरार्च्चिता विद्या विशालनयनानना।
विभूतिदा विष्णुमाता मन्त्रसिद्धिं प्रयच्छ मे ।। ९

मन्त्रसिद्धिस्तवं पुण्यं महामोक्षफलप्रदम्।
महामोहहरं साक्षात् सत्यं मन्त्रस्य सिद्धिदम् ।। १०

(महाकालसंहितायां)

****

# श्रीबालापञ्चरत्नस्तोत्रम्

आई आनन्दवल्ली अमृतकरतली आदिशक्तिः पराई
माया मायात्मरूपी स्फटिकमणिमयी मामतङ्गी षडङ्गी।
ज्ञानी ज्ञानात्मरूपी नलिनपरिमली नाद ओङ्कारमूर्तिः
योगी योगासनस्था भुवनवशकरी सुन्दरी ऐं नमस्ते ।। १

बालामन्त्रे कटाक्षी मम हृदयसुखी मत्तभाव प्रचण्डी
व्याली यज्ञोपवीती विकटकटितटी वीरशक्तिः प्रसन्ना ।
बाला बालेन्दुमौलिर्मदगजगमना साक्षिका स्वस्तिमन्त्री
काली कङ्कालरूपी कटिकटिकहीं कारिणी क्लीं नमस्ते ।। २

मूलाधारा महात्मा हुतवहनयनी मूलमन्त्रा त्रिनेत्रा
हारा केयूरवल्ली अखिलत्रिपदका अम्बिकायै प्रियायै।
वेदा वेदाङ्गनादा विनतघनमुखी वीरतन्त्रीप्रचारी
सारी संसारवासी सकलदुरितहा सर्वतो ह्रीं नमस्ते ।। ३

ऐं क्लीं ह्रीं मन्त्ररूपा शकलशशिधरा सम्प्रदायप्रधाना
क्लीं ह्रीं श्रीं बीजमुख्यैः हिमकरदिनकृत् ज्योतिरूपा सरूपा।

सौं क्लीं ऐं शक्तिरूपा प्रणवहरिसते बिन्दुनादात्मकोटिः
क्षां क्षीं क्षूं कारनादे सकलगुणमयी सुन्दरी ऐं नमस्ते ।। ४

अध्यानाध्यानरूपा असुरभयकरी आत्मशक्तिस्वरूपा
प्रत्यक्षा पीठरूपी प्रलययुगधरा ब्रह्मविष्णुत्रिरूपी ।
शुद्धात्मा सिद्धरूपा हिमकिरणनिभा स्तोत्रसंक्षोभशक्तिः
सृष्टिस्थित्यन्तमूर्त्ती त्रिपुरहरजयी सुन्दरी ऐं नमस्ते ।। ५

****

# श्री बाला पञ्चचामरस्तवः

गिरीन्द्रराजबालिकां दिनेशतुल्यरूपिकाम् ।
प्रवालजाप्यमालिकां भजामि दैत्यमर्दिकाम् ।। १

निशेशमौलिधारिकां नृमुण्डपङ्क्तिशोभिकाम् ।
नवीनयौवनाख्यकां स्मरामि पापनाशिकाम् ।। २

भवार्णवात्तु तारिकां भवेन सार्धखेलिकाम् ।
कुतर्ककर्मभञ्जिकां नमामि प्रौढरूपिकाम् ।। ३

स्वरूपरूपकालिकां स्वयं स्वयम्भुस्वात्मिकाम् ।
खगेशराजदण्डिकां अईकरां सुबीजकाम् ।। ४

श्मशानभूमिशायिकां विशालभीतिवारिणीम् ।
तुषारतुल्यवाचिकां सनिम्नतुङ्गनाभिकाम् ।। ५

सुपट्टवस्त्रसाजिकां सुकिङ्किणीविराजिताम् ।
सुबुद्धिबुद्धिदायिकां सुरा सदा सुपीयकाम् ।। ६

सक्लीं ससौं ससर्गकां सनातनेश चाम्बिकाम् ।
ससृष्टिपालनाशिकां प्रणौमि दीर्घकेशकाम् ।। ७

सहस्रमार्गपालिका परापरात्मभव्यकाम ।
सुचारुचारुवक्त्रका शिवं ददातु भद्रिका ।। ८

इत्येतत्परमं गुह्यं पञ्चचामरसंज्ञकम् ।
बालाग्रे यः पठति च तस्य सिद्धिर्भवेद्ध्रुवम् ।। ९

यं यं चिन्तयते कामं तं तं प्राप्नोति साधकः ।
सिद्धिः करतले तस्य मृते मोक्षमवाप्नुयात् ।। १०

(चन्द्रद्वीपावतारे)

****

# श्री बालामन्त्रगर्भाष्टकम्

ऐंकाररूपिणीं सत्यां ऐंकाराक्षरमालिनीम् ।
ऐंबीजरूपिणीं देवीं बालादेवीं नमाम्यहम् ।। १

वाग्भवां वारुणीपीतां वाचासिद्धिप्रदां शिवाम् ।
बलिप्रियां वरालाढ्यां वन्दे बालां शुभप्रदाम् ।। २

लाक्षारसनिभां त्र्यक्षां ललज्जिह्वां भवप्रियाम् ।
लम्बकेशीं लोकधात्रीं बालां द्रव्यप्रदां भजे ।। ३

यैकारस्थां यज्ञरूपां यूं रूपां मन्त्ररूपिणीम् ।
युधिष्ठिरां महाबालां नमामि परमार्थदाम् ।। ४

नमस्तेऽस्तु महाबालां नमस्ते शङ्करप्रियाम् ।
नमस्तेऽस्तु गुणातीतां नमस्तेऽस्तु नमो नमः ।। ५

महामन्त्रीं मन्त्ररूपां मोक्षदां मुक्तकेशिनीम् ।
मांसांशी चन्द्रमौलिं च स्मरामि सततं शिवाम् ।। ६

स्वयम्भुवां स्वधर्मस्थां स्वात्मबोधप्रकाशिकाम्।
स्वर्णाभरणदीप्ताङ्गां बालां ज्ञानप्रदां भजे॥ ७

हा हा हा शब्दनिरतां हास्यां हास्यप्रियां विभुम्।
हुङ्काराद्दैत्यखण्डाख्यां श्रीबालां प्रणमाम्यहम्॥ ८

इत्यष्टकं महापुण्यं बालायाः सिद्धिदायकम्।
ये पठन्ति सदा भक्त्या गच्छन्ति परमां गतिम्॥ ९

(कुलचूडामणितन्त्रे)

****

# श्रीबालापञ्चाङ्गम्

श्रीभैरव उवाच—

अधुना देवि वक्ष्यामि रहस्यं स्तोत्ररूपकम्।
येन साधक ईशानि साक्षात् श्रीभैरवायते॥ १

अङ्गं त्रिपुरसुन्दर्याः पञ्चमाख्यां महेश्वरि।
पञ्चमी रूपमानन्दरूपमानन्दवर्धनम्॥ २

तत्त्वं श्रीत्रिपुरादेव्याः श्यामायाश्च रहस्यकम्।
स्तोत्रराजः परादेव्याः परमानन्दकारणम्॥ ३

स्तोत्रस्यास्य महादेवि ऋषिः प्रोक्तः सदाशिवः।
पङ्क्तिश्छन्दः समाख्यातं देवता त्रिपुरा स्मृता॥ ४

धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः।

ध्यानम्—

सूर्यकोटिसमानाभां चतुर्बाहुं त्रिलोचनाम्।
रक्तपद्मसमासीनां रक्तवस्त्राद्यलङ्कृताम्॥

पुस्तकं चाक्षमालां च वरं चाभयमेव च ।
दधतीं च हृदम्भोजे श्रीबालात्रिपुरां भजे ।।

वाग्भवं भवमहार्णवप्रोक्तं यो जपेन्मनसि मानवतीनाम् ।
कामकेलिषु भवेत्स साधकः कामदेव इव वैरिबाधकः ।। १

मदनं मदनाक्षरं जपेद् यो वदनाच्छादनबद्धमौनमुद्रः ।
स भवेद्भवसागरैकपोतो भवरूपो भुवनत्रयेश्वरः स्यात् ।। २

शक्तिबीजमनघं सुधाकरं साधको यदि जपेद् हृदि भक्त्या ।
तस्य देववनिता चरणाब्जौ रञ्जयन्ति मुकुटैर्मणियुक्तैः ।। ३

बिन्दुत्रिकोणवसुनागदलाढ्य वेद
गेहान्विते परमयन्त्रवरे निषण्णाम् ।
ध्यायन्ति ये परिकरेण समन्वितां त्वां
सम्प्राप्नुवन्ति तव देवि परं पदं तत् ।। ४

इतीदं परमं गुह्यमङ्गभूतं हि पञ्चमम् ।
देवि त्रिपुरसुन्दर्याः श्रीबालायाः स्तवोत्तमम् ।। ५

रहस्यमेतदखिलं न कस्य कथितं मया ।
तव भक्त्या मया ख्यातं न प्रकाश्यं महेश्वरि ।। ६

इदं पञ्चाङ्गमनिशं बालायाः सारमुत्तमम् ।
गोप्यं गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः ।। ७

(श्री रुद्रयामले)

****

# श्री बालोपनिषत्

## (अथर्ववेदीया)

ऐं नमः श्रीबालायै। श्री बालोपनिषदं व्याख्यास्यामः। शृणु प्रिये चक्र चक्रस्था, महात्मा, महागुह्या, गुह्यतरा, श्रेष्ठातिश्रेष्ठा, भव्या, भव्यतरा, त्रिगुणगा, गुणातीता, गुणस्वरूपा, गुङ्कारमध्यस्था रेचकपूरककुम्भस्वरूपा, अष्टाङ्गरूपा चतुर्दशभुवनमालिनी, चतुर्दशभुवनेश्वरी चतुर्वेदवेदाङ्गपारगा, सांख्यासांख्यस्वरूपा, शान्ता, शाक्तप्रिया, शाक्तधर्मपरायणा, सर्वभद्रा विभद्रा, सुभद्रा, भद्रभद्रान्तर्गता, वीरभद्रावतारिणी, शून्या शून्यतरा शून्यप्रभवा शून्यालया शून्यज्ञानप्रदा शून्यातीता शूलहस्ता महासुन्दरी सुरासुरारिविध्वंसिनी शूकरानना सुभगा शुभदा सुशुभा शस्त्रास्त्रधारिणी पराप्रासादवामाङ्गा परमेश्वरी परापरा परमात्मा पापघ्ना पञ्चेन्द्रियालया परब्रह्मावतारा पद्महस्ता पाञ्चजन्या पुण्डरीकाक्षा पशुपाशहारिणी पशुपपूज्या पाखण्डध्वंसिनी पवनेशी पवनस्वरूपा पद्यापद्यमयी पद्यज्ञानप्रदात्री पुस्तहस्ता पक्वबिम्बफलप्रभा प्रेतासना प्रजापाली प्रपञ्चहारिणी पृथिवीरूपा पीताम्बरा पिशाचगणसेविता पितृवनस्था हंसस्वरूपा परमहंसी ऐङ्कारबीजा वाग्भवस्था वाग्भवबीजोद्योगिनी वाग्भवेशी वाग्भवबीजमालिनी यः एवं वेद स वेदवित्। बालोपनिषदं यः पठति यः शृणोति तस्याघं सर्वं नश्यति चतुर्वर्गफलं प्राप्नोति लयज्ञानं भवति ज्योतिर्मये प्रलीयते षट्कर्मविद्या सिद्ध्यति मनोरथं पूरयति सर्वारिष्टं नाशयति धनं एधति आयुर्वृद्धिर्भवति निर्वाणपदं गच्छति महाजनत्वं प्राप्नोति सर्वशास्त्रं ज्ञापयति बहुतरसिद्धिं नयति डाकिन्यादि सर्वं पलायति ओङ्कारे प्रमीलति।

****

# श्री बाला खड्गमाला स्तोत्रम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः बालात्रिपुरसुन्दर्यै हृदयदेवि शिरोदेवि शिखादेवि कवचदेवि नेत्रदेवि अस्त्रदेवि, दिव्यौघाख्यगुरुरूपिणि प्रकाशानन्दमयि परमेशानन्दमयि परशिवानन्दमयि कामेश्वरानन्दमयि मोक्षानन्दमयि कामानन्दमयि अमृतानन्दमयि; सिद्धौघाख्यगुरुरूपिणि ईशानमयि तत्पुरुषमयि अघोरमयि वामदेवमयि सद्योजातमयि; मानवौघाख्य गुरुरूपिणि गगनानन्दमयि विश्वानन्दमयि विमलानन्दमयि मदनानन्दमयि आत्मानन्दमयि प्रियानन्दमयि; गुरुचतुष्टयरूपिणि गुरुमयि परमगुरुमयि परात्परगुरुमयि परमेष्ठिगुरुमयि; सर्वज्ञे नित्यतृप्ते अनादिबोधे स्वतन्त्रे नित्यमलुप्ते रतिमयि प्रीतिमयि मनोभवामयि; सर्वसंक्षोभणबाणमयि सर्वविद्रावण-बाणमयि सर्वाकर्षणबाणमयि वशीकरणबाणमयि उन्मादनबाणमयि; काममयि मन्मथमयि कन्दर्पमयि मकरध्वजमयि मनोभवमयि; सुभगामयि भगामयि भगसर्पिणीमयि भगमालामयि अनङ्गामयि अनङ्गकुसुमामयि अनङ्गमेखलामयि अनङ्गमदनामयि; ब्राह्मीमयि माहेश्वरीमयि कौमारीमयि वैष्णवीमयि वाराहीमयि इन्द्राणीमयि चामुण्डामयि महालक्ष्मीमयि, असितांगमयि रुरुमयि चण्डमयि क्रोधमयि उन्मत्तमयि कपालमयि भीषणमयि संहारमयि, कामरूपपीठमयि मलयपीठमयि कुलनागगिरिपीठमयि कुलान्तकपीठमयि चौहारपीठमयि जालन्धरपीठमयि उड्यानपीठमयि देवीकोटपीठमयि, हेतुकमयि त्रिपुरान्तकमयि वेतालमयि अग्निजिह्वमयि कालान्तकमयि कपालमयि एकपादमयि भीमरूपमयि मलयमयि हाटकेश्वरमयि, इन्द्रमयि अग्निमयि यममयि निरृतमयि वरुणमयि वायुमयि

कुबेरमयि ईशानमयि ब्रह्ममयि अनन्तमयि, वज्रमयि शक्तिमयि दण्डमयि खड्गमयि पाशमयि अङ्कुशमयि गदामयि त्रिशूलमयि पद्ममयि चक्रमयि, श्री श्री बालात्रिपुरसुन्दरि सर्वानन्दमयि नमस्ते नमस्ते नमस्ते स्वाहा सौः क्लीं ऐं।

****

# श्री बाला सहस्राक्षरी स्तोत्रम्

ऐं नमः श्री बालायै। ऐं नमो बालायै त्रिगुणरहितायै क्लीं शिवारूपिण्यै, शिवोर्ध्वगतायै, त्रिमात्रायै सौः सर्वदेवाधिदेवीश्वर्यै ऐं खं ऐं खं ऐं खं फट् ॐ क्लीं ॐ क्लीं ॐ क्लीं ॐ फट् हंसः सौः हंसः सौः सः सौः फट् ह्रां ह्रीं ह्रूं ऊर्ध्वाम्नायेश्वर्यै ख्फ्रें ह्फ्रें स्फ्रें ह्रीं ह्रूं ह्रैं ह्रौं फट् त्रीं ध्रीं प्रीं फ्रीं त्रैलोक्यविजयेश्वर्यै महाप्रकाशायै स्वाहा (शताक्षरी।)

ऐं ह्रीं ख्फ्रें ह्फ्रें ह्स्ख्फ्रें ॐ ह्रूं क्लीं रां रीं रूं सौः ओङ्काररूपिण्यै ऐंकारसंस्थितायै हंसः सोहं परमात्मा जगन्मयी यज्ञरूपिण्यै जनानन्ददायिन्यै त्रिजगतामधीश्वर्यै ह्रीं ह्रीं ह्रीं फट् फट् फट् शत्रुनाशिन्यै जयप्रदायै त्रिविद्याचक्रेश्वर्यै नरमुण्डमालाधारिण्यै नरचर्मावगुण्ठिन्यै नरास्थिहारिण्यै महादेवासनि संसारार्णवतारिणि मम शत्रुं भञ्जय भञ्जय तुरु तुरु मुरु मुरु हिरि हिरि मनोरथं पूरय पूरय ममाधिव्याधिं नाशय नाशय छिन्धि छिन्धि भिन्दि भिन्दि कुरुकुल्ले सर्वारिष्टं विनाशय विनाशय हेरि हेरि गेरि गेरि त्रासय त्रासय मम रिपून् भ्रामय भ्रामय खड्गेन खण्डं खण्डं कुरु कुरु इषुणा मर्म भेदय भेदय, ऐं ख्रें ख्रैं ख्रों ख्रौः ख्रः रक्तवर्णशरीरे महाघोररावे शरबाणहस्ते वराभयाङ्कितचारुहस्ते हूँ हूँ हूँ फट् चतुर्दशभुवनमालिनि चतुर्दशविद्याधीश्वरि चतुर्वेदाध्यायिनि चातुर्वर्ण्य एकाकारकारिणि कान्तिदायिनि महाघोरघोरतरे

अघोरामुखि अघोरमूर्ध्नि संस्थिते परापरपरब्रह्माधिरूढिनि ह्रीं ढ्रीं क्षीं फट् ॐ ऐं ॐ क्लीं ॐ सौः श्रीं ऐं ऐं ऐं ह्सैं स्हैं ॐ ह्वः फट् पञ्चप्रेतासने महामोक्षदात्री ॐ हूँ फट् ह्वः फट् छ्रां छ्रीं छ्रौं ॐ जगद्योनिरूपे योनिसर्पिर्णिभूषिणि योनिसृक्शिरभूषिणि योनिमालिनि योनिसङ्कोचिनि योनिमध्यगते द्रां द्रीं द्रूं क्षौं हः फट् क्षां यां रां लां वां शां हां ॐ।

ॐ फट् ऐं हूँ फट् क्लीं हूँ फट् सौः हुँ फट् श्मशानवासिनि श्मशानभस्मलेपिनि श्मशानाङ्गारनिलये शवारूढे शवमांसभक्षमहाप्रिये शवपरितोन्यापितहाहाशब्दातिप्रिये डामरि भूतिनि योगिनि डाकिनि राक्षसि सहविहारिणि पराप्रसादगेहिनि भस्मीलेपकारविभूषिते फ्रं ख्फ्रें हस्फ्रें ख्फ्रैं हस्ख्फ्रें सूह्ख्फ्रें गां गीं गूं सः फट् क्म्रीं च्म्रीं ढ्म्रीं ह्म्रीं क्ष्म्रीं फट् गिरिनिवासिनि गिरिपुष्पसंशोभिनि गिरिपुत्रि गिरिधारिणि गीतवाद्यविमोहिनि त्रैलोक्यमोहिनि देवि दिव्याङ्गवस्त्रधारिणि दिव्यज्ञानप्रदे दिग्विषन्माते सिद्धिप्रदे सिद्धिस्वरूपे सिद्धिविद्योतातीतातीते खमार्ग प्रचारिणि खगेश्वरि खड्गहस्तिनि खंबीजमध्यगते ॐ ऐं ॐ ह्रीं ॐ श्रीं ॐ फट् तां तीं तूं तैं तौं तः हां हीं हूं हैं हौं हः वां वीं वूं वैं वौं वः च्फ्रें ह्फ्रें क्ष्प्रें अं कं चं टं तं पं यं शं मातृकाचक्रचक्रे हासिनि ह्वां ह्वीं ह्वूं ह्वैं ह्वौं ह्वः श्लीं हूँ फट् अं आं ऐं इं ईं ऐं उं ऊं ऐं ऋं ॠं ऐं ऐं ऐं ऐं ओं औं ऐं अं अः ऐं फट्। निर्वाणरूपे निर्वाणातीते निर्वाणदात्रि निरङ्कुशिनि निराकारे निरञ्जनावतारिणि षट्चक्रेश्वरि सहस्रात्मे महासूक्ष्मसूक्ष्मे सूक्ष्मातीतसूक्ष्मनामरूपिणि महाप्रलयान्त एकशेषसाक्षिणि संसाराब्धि दुःखतारिके सृष्टिस्थित्यन्तकारिके क्मांलांवुंयूं ग्मांलांवुंयूं स्मौंलां वुं यूं क्ष्मांलां वुं यूं ह्रीं धं छिंधि सुबुद्धिं दद दद मोक्षमार्ग दर्शय दर्शय तवानुचरं कुरु कुरु हिरि हिरि धिमि धिमि धिमिं महाडमरुवांदनमहाप्रिये आं हूँ हूँ हूँ हूँ फट् मम हृदये तिष्ठ तिष्ठ सुफलं

देहि देहि ।। ४७ ।। सर्वतीर्थफलं प्रदापय प्रदापय सर्वदानफलं प्रापय प्रापय ज्योतिःस्वरूपिणि सर्वयोगफलं कुरु कुरु स्फ्रों क्रों ह्रीं ऐं क्लीं सौः

****

# श्री बालाशान्तिस्तोत्रम्

श्री भैरव उवाच–

जय देवि जगद्धात्रि जय पापौघहारिणि।
जय दुःखप्रशमनि शान्तिर्भव ममार्चने ।। १

श्रीबाले परमेशानि जय कल्पान्तकारिणि।
जय सर्वविपत्तिघ्ने शान्तिर्भव ममार्चने ।। २

जय बिन्दुनादरूपे जय कल्याणकारिणि।
जय घोरे च शत्रुघ्ने शान्तिर्भव ममार्चने ।। ३

मुण्डमाले विशालाक्षि स्वर्णवर्णे चतुर्भुजे।
महापद्मवनान्तस्थे शान्तिर्भव ममार्चने ।। ४

जगद्योनि महायोनि निर्णयातीतरूपिणि।
पराप्रासादगृहिणि शान्तिर्भव ममार्चने ।। ५

इन्दुचूडयुते चाक्षहस्ते श्री परमेश्वरि।
रुद्रसंस्थे महामाये शान्तिर्भव ममार्चने ।। ६

सूक्ष्मे स्थूले विश्वरूपे जय सङ्कटतारिणि।
यज्ञरूपे जाप्यरूपे शान्तिर्भव ममार्चने ।। ७

दूतीप्रिये द्रव्यप्रिये शिवे पञ्चाङ्कुशप्रिये।
भक्तिभावप्रिये भद्रे शान्तिर्भव ममार्चने ।। ८

भावप्रिये लासप्रिये कारणानन्दविग्रहे।

श्मशानस्य देवमूले शान्तिर्भव ममार्चने ।। ९

ज्ञानाज्ञानात्मिके चाद्ये भीतिनिर्मूलनक्षमे ।
वीरवन्द्ये सिद्धिदात्रि शान्तिर्भव ममार्चने ।। १०

स्मरचन्दनसुप्रीते शोणितार्णवसंस्थिते ।
सर्वसौख्यप्रदे शुद्धे शान्तिर्भव ममार्चने ।। ११

कापालिकि कलाधारे कोमलाङ्गि कुलेश्वरि ।
कुलमार्गरते सिद्धे शान्तिर्भव ममार्चने ।। १२

शान्तिस्तोत्रं सुखकरं बल्यन्ते पठते शिवे ।
देव्याः शान्तिर्भवेत्तस्य न्यूनाधिक्यादिकर्मणि ।। १३

मन्त्रसिद्धिकामनया दशावृत्त्या पठेद्यदि ।
मन्त्रसिद्धिर्भवेत्तस्य नात्र कार्या विचारणा ।। १४

चन्द्रसूर्योपरागे च यः पठेत्स्तोत्रमुत्तमम् ।
बाला सद्मनि सौख्येन बहुकालं वसेत्ततः ।। १५

सर्वभद्रमवाप्नोति सर्वत्र विजयी भवेत् ।
तीर्थकोटिगुणं चैव दानकोटिफलं तथा ।
लभते नात्र सन्देहः सत्यं सत्यं मयोदितम् ।। १६

(चिन्तामणितन्त्रे)

****

# श्रीबालाहृदयम्

अस्य श्रीबालादेव्या हृदयमहामन्त्रस्य, सदाशिवः ऋषिः, अनुष्टुप्छन्दः । बालात्रिपुरसुन्दरी देवता। न्यासा मूलमन्त्रवत्।

ध्यानम् -

वन्दे देवीं शिवां बालां भास्वन्मण्डलमध्यगाम्।
चञ्चच्चन्द्राननां तप्तचामीकरसमप्रभाम्।। १

नृत्यत्खञ्जननेत्रस्य लोचना त्यन्तवल्लभाम्।
मध्यभागे लसत्काञ्ची मणिमुक्ताविनिर्मिताम्।। २

पदविन्यस्तहंसालीं शुकनासाविराजिताम्।
करिशुण्डोरुयुगलां मत्तकोकिलनिःस्वनाम्।। ३

पुस्तकं जपमालाञ्च वरदाभयपाणिनीम्।
कुमारीवेशशोभाढ्यां कुमारीवृन्दमण्डिताम्।। ४

विद्रुमाधरशोभाढ्यां विद्रुमालिनखालिकाम्।
क्वणत्काञ्चीं कलानाथसमानरुचिराननाम्।। ५

मृणालबाहुलतिकां नानारत्नविराजिताम्।
करपद्मसमानाभां पादपद्मविराजिताम्।। ६

चारुचाम्पेयवसनां देवदेवनमस्कृताम्।
चन्दनेन्दुविलिप्तांगीं रोमराजीविचित्रिताम्।। ७

तिलपुष्पसमानाभां नासारत्नसमन्विताम्।
गजगण्डनितम्बाभां रम्भाजंघाविराजिताम्।। ८

हरविष्णुमहेन्द्राद्यैः पूज्यश्री पादपङ्कजाम्।
कल्याणीं कमलां कालीं कुञ्चिकां कमलेश्वरीम्।। ९

पावनीं परमां शक्तिं पवित्रां पावनीं शिवाम्।
भवानीं भवपाशघ्नीं भीतिहां भुवनेश्वरीम्।। १०

भवानीं भवशक्तिश्च भेरुण्डां मुण्डमालिनीम्।
जलंधरगिर्युत्संगां पूर्णगिर्यनुरागिणीम्॥ ११
कामरूपां च कामाख्यां देवीकोटकृतालयाम्।
ॐ कारपीठनिलयां महामायां महेश्वरीम्॥ १२
विश्वेश्वरीं च मधुरां नानारूपा क्रतापुरीम्।
ऐं क्लीं सौः त्र्यक्षरां बालां तद्विलोमां कुमारिकाम्॥ १३
हौः ऐं हंसः नमो देवि त्रिपुरां जीव भैरवीम्।
नारदो यस्य देवर्षिः महाशान्तिफलप्रदाम्॥ १४
ॐ नमो श्री महालक्ष्म्यै लक्ष्मीं त्रिपुरभैरवीम्।
ॐ ह्रीं जूं सः प्राणग्रन्थिः द्विधार्गकवचद्वयम्॥ १५
इयं सञ्जीविनी देवी मृतान् जीवत्वदायिनी।
फ्रेः फ्रं न फ ल व र यूं श्रों श्रों अमृतमावदेत्॥ १६
स्रावय स्रावय तथा व्रीं व्रीं मृत्युञ्जयाभिधा।
ॐ नमों प्रथमाभाष्य कालीबीजं द्विधा पठेत्॥ १७
कूर्चद्वयं तथा माया आगामिपदमा वदेत्।
मृत्युं छिंदि तथा भिंदि महामृत्युञ्जयो भवेत्॥ १८
तव शब्दं ममाभाष्य खड्गेन च विदारय।
द्विधा भाष्य महेशानि तदन्ते वह्निसुन्दरी॥ १९
इयं देवी महाविद्या आगामि कालवञ्चिनी।
प्रातर्दीपदलाकारं वाग्भवं रसनातले॥ २०
विचिन्त्य प्रजपेत्तच्च महाकविर्भवेद् ध्रुवम्।
मध्याह्ने कामराजाख्यं जपाकुसुमसन्निभम्॥ २१
विचिन्त्य हृदि मध्ये तु तच्च मन्त्रं जपेत्प्रिये।
धर्मार्थकाममोक्षाणां भाजनो जायते ध्रुवम्॥ २२
तार्तीयं चन्द्रसङ्काशं सायं काले विचिन्त्य च।
प्रजपेत्तत्र देवेशि जायते मदनोपमः॥ २३

वाग्भवं कामराजं तु तार्तीयं वह्निवल्लभाम्।
अयुतं प्रजपेन्नित्यं आगामी कालो वक्ष्यते ॥ २४
त्रिकोणं चक्रमालिख्य मायायुक्तं महेश्वरि।
तस्योपरि लिखेत्पद्मं मातृका मन्त्रगर्भितम् ॥ २५
तस्योपरि समास्तीर्य चासनं रक्तवर्णकम्।
तस्योपरि विशेद्देवि साधकः प्राङ्मुखोनिशि ॥ २६
क्रमेण प्रजपेद्वर्णान् वागादि नियतः शुचिः।
मण्डलत्रितये देवि प्राप्यते सिद्धिरुत्तमा ॥ २७
नवयोन्यात्मकं चक्रं पूजयेच्छास्त्रवर्त्मना।
प्रजपेद् द्व्यक्षरीं बालां सर्वसिद्धीश्वरो भवेत् ॥ २८
यं यं चिन्तयते कामं तं तं प्राप्नोति सर्वशः।
इदं तु हृदयं देवि तवाग्रे कथितं मया ॥ २९
मम भाग्यं च सर्वस्वं ब्रह्मादीनां च दुर्लभम्।
गोपनीयं त्वया भद्रे स्वयोनिरिव पार्वति ॥ ३०
शतावर्तेन देवेशि मानुषी वशमाप्नुयात्।
सहस्रावर्तनाद्देवि देवा वै वशमाप्नुयुः ॥ ३१
लक्षमावर्तनाद्देवि शुनासीरः स्वकासनात्।
क्षणाच्च्यवति तत्र वै किं पुनः क्षुद्रजन्तवः ॥ ३२
तस्मात्सर्वप्रयत्नेन ज्ञात्वा देवि जपेन्मनुम्।
सर्वसिद्धिमवाप्नोति सर्वदा सुखवान्भवेत् ॥ ३३

(जालशंबरमहातन्त्रे)

पूजाङ्गत्वेन जपकाले मूलमन्त्रजपानन्तरं विग्रहादौ मूलमन्त्रेण देवीमावाह्य यथोचितं आवाहनाद्युपचारान् कृत्वा पूजासमाप्तौ, पुनः हृदयादिन्यासं भूर्भुवस्सुवरों इति दिग्बन्धं ध्यानं लमित्यादिपूजां कृत्वा मूलमन्त्रं यथाशक्ति जप्त्वा पुनः हृदयादिन्यासं भूर्भुवस्सुवरों इति दिग्विमोकं लमित्यादि पञ्चपूजां च कृत्वा जपं देव्यग्रे समर्पयेत्।

## श्री बालागायत्री

४. बालाशक्त्यै च विद्महे त्र्यक्षर्यै च धीमहि।

तन्नः शक्तिः प्रचोदयात्।

चतुर्विंशति सहस्रजपः, अपामार्गेण लाजेन आज्येन च होमः, तद् दशांशः, क्षीरेण तर्पणं तद्दशांशं, ब्राह्मणभोजनं तद्दशांशम्। वन्ध्यायाः पुत्रोत्पत्तिः, कुक्षिरोगनिवृत्तिः, शत्रुनाशः, राजवशीकरणं च फलम्।

४. ऐं वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि। तन्नः शक्तिः प्रचोदयात्। (अर्धरात्रे)

४. ऐं त्रिपुरादेव्यै च विद्महे वागीश्वर्यै च धीमहि। तन्नो मुक्तिः प्रचोदयात्।

* * *

## ॥ आवाहनम् ॥

ऋषिच्छन्दो देवतान्यासादिकं मूलमन्त्रवत्।

ललितातनयां देवीं बालार्ककिरणप्रभाम्।

चतुर्हस्तां त्रिणयनां पीतवस्त्रां शुचिस्मिताम्।

सर्वालङ्कार शोभाढ्यां सर्वदेवैः समावृताम्।

सर्वसिद्धिमयीं गौरीं सर्वमन्त्राधि देवताम्।

सर्वज्ञानप्रदां नित्यां सर्वैश्वर्यफलप्रदाम्।

सर्व शृङ्गारवेषाढ्यां सर्वलोकनिवासिनीम्।

साम्राज्यदायिनीं सत्यप्रियां चिन्मातृ विग्रहाम्।

सच्चिदानन्दरूपाढ्यां सदाशिवसुतां पराम्।

सच्चिन्मयी सुखाराध्यां सर्वलोकस्वरूपिणीम्।

सर्वव्याधि प्रशमनीं सर्वमृत्यु निवारिणीम्।

सर्वमृत्युहरां वन्दे सर्वापदविमोचिनीम्।

साक्षद्ब्रह्ममयीं बालां कन्यामावाहयाम्यहम्।

अं कं खं घं चं ठं यं यरलवशषसहों

आं ह्रीं क्रों ऐं क्लीं सौः ह्रां ह्रीं हूं ह्रैं ह्रौं ह्रः

श्रां श्रीं श्रूं श्रैं श्रौं श्रः एह्येहि भगवति आगच्छागच्छ क्लां क्लीं क्लूं क्लैं क्लौंः क्लः श्री बालाम्बिके मम हृदये आवेशय आवेशय चिरं तिष्ठ तिष्ठ वरदा भव प्रसन्ना भव सुखासीना भव चिरं तिष्ठ तिष्ठ (मम वश्याकर्षण-स्तम्भनोच्चाटन मोहन जृम्भणद्रावण विद्रावण शोषण प्लावनादि सर्वकर्माणि दापय दापय सर्वशत्रून्विद्रावय विद्रावय ज्वल ज्वल प्रज्वल प्रज्वल शत्रुनेत्राणि अन्धीकुरु कुरु अन्धीकुरु कुरु शत्रुहृदयं भेदय भेदय शत्रुगतिं निरोधय निरोधय शत्रुमनः स्तम्भय स्तम्भय शत्रु पुत्र-मित्रकलत्रान् नाशय नाशय शत्रु प्राणान्भ्रामय भ्रामय शत्रुगृहाणि दाहय शत्रुवित्तानि क्षपय क्षपय) मम पुत्र मित्रकलत्राणि पालय पालय ममैश्वर्यवृद्धिं कुरु कुरु मम सर्वविद्यां देहि देहि मम सर्वसुखानि दापय दापय स्वाहा। ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः श्रीं ह्रीं क्लीं जय जय स्वाहा।

* * *

## श्रीबालान्यासविधिः

अस्य श्रीबालान्यासमहामन्त्रस्य, दक्षिणामूर्तिः ऋषिः। देवी गायत्री छन्दः। श्रीबालापरमेश्वरी देवता। ऐं बीजं, क्लीं शक्तिः, सौः कीलकम्। श्री बालात्रिपुरसुन्दरीप्रीत्यर्थे जपे विनियोगः।

*मूलेन न्यासः। ध्यानं—*

शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी

नित्यानन्दमयी निरञ्जनमयी संपन्मयी चिन्मयी।

तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी
सर्वैश्वर्यमयी सदाशिवमयी मां पहि बालाम्बिके ॥

*लमित्यादि पञ्चपूजा।*

बालाम्बिकायै नमः (प्राच्यां) । कुमारिकायै नमः (दक्षिणस्यां) । ललिता पुत्र्यै नमः (पश्चिमायां) । शाम्भव्यै नमः (उत्तरस्याम्) । भण्डपुत्रदमन्यै नमः (आग्नेय्यां) । चिन्मय्यै नमः (नैरृकृत्यां) । ईशनन्दिन्यै नमः (वायव्यां) । देव्यै नमः (ऐशान्यां) । ब्रह्माण्ड रूपिण्यै नमः (ऊर्ध्वायां) । सर्वरूपायै नमः (अधः) ।

ऐंकार्यै नमः (मूर्ध्नि) । क्लींकार्यै नमः (फालमध्ये) सौः कार्यै नमः (वक्त्रे) । कामेश्यै नमः (कण्ठदेशे) । चतुर्भुजायै नमः (हृदयदेशे) । अभयप्रदायै नमः (वामे स्तने) । शक्त्यै नमः (दक्षिणस्तने) । सर्वाङ्ग सुन्दर्यै नमः (कुक्षौ) । मणि निभच्छायायै नमः (नाभौ) । पाटलप्रभायै नमः (जघने) । परमायै नमः (ऊरुद्वन्द्वे) शिवयोगिन्यै नमः (जान्वोः) । महामायायै नमः (जंघाद्वये) । परात्परायै नमः (पादद्वन्द्वे) । आत्मानन्द स्वरूपिण्यै नमः (हस्तयोः) ।

पञ्चब्रह्ममय्यै देव्यै नमः (पार्श्वयोः) । नारदादिभिरर्चितायै नमः (नेत्रयोः) । दुष्टप्रशमन्यै देव्यै नमः (पृष्ठे) । भुवनानन्दकारिण्यै अम्बायै नमः (नासाग्रे) । नवमाणिक्यशोभाढ्यायै नमः (कपोलयोः) । दशोर्ध्ववयसोपेतायै नमः (दन्तेषु) । श्रुत्यर्थफलदायिन्यै नमः (कर्णयोः) ।

४ ऐं शैलपुत्र्यै नमः (पादयोः) । ४ क्लीं ब्रह्मचारिण्यै नमः (जान्वोः) । ४ सौः ब्रह्मचारिण्यै नमः (कट्याम् ) । ४ सौः

कूष्माण्डायै नमः (नाभौ) । ४ क्लीं स्कन्दमात्रे नमः (कुक्षौ) । ४ एं कात्यायिन्यै नमः । (हृदये) । ४ ऐं कालरात्र्यै नमः (कण्ठे) । ४ क्लीं महागौर्यै नमः (मुखे) । ४ सौः सिद्धि-प्रदायै नमः (ललाटे) । ४ सौः बालापरमेश्वर्यै नमः (ब्रह्मरन्ध्रे) । ४ क्लीं महालक्ष्म्यै नमः (दक्षिणपार्श्वे) । ४ ऐं महासरस्वत्यै नमः (वामपार्श्वे)

किरीट कुण्डलोपेतां कङ्कणाङ्गद धारिणीम् ।
पीतवस्त्रेण संयुक्तां ब्रह्मानन्द फलप्रदाम् ।।

ब्रह्मादि दैवतैः पूज्यां ब्रह्मानन्दविवर्धिनीम् ।
माणिक्य मकुटोपेतां अङ्गैरलङ्कृतां शुभाम् ।।

सर्वदेवैः परिवृतां सर्वसिद्धैर्निषेविताम् ।
सर्वमन्त्र फलोपेतां साम्राज्यफलदायिनीम् ।
रमावाणी समोपेतां राजराजार्चितांघ्रि काम् ।।
साक्षाद्ब्रह्ममयीं देवीं चिन्तये सर्वतो मम ।।

## बालाध्यानम्

ईक्षे बालां परां शक्तिं ललिता तनयां शिवाम् ।
कोटिसूर्य प्रतीकाशां चन्द्रकोटि सुशीतलाम् ।।

हृत्पुण्डरीकनिलयां पूगस्तनविराजिताम् ।
बालार्क किरणोपेतां फाल चन्द्रधरां शिवाम् ।।

अक्षमाला पुस्तधरां वरदाभयशोभिताम् ।
सर्वाभरण शोभाढ्यां सर्वावयवसुन्दरीम् ।।

अनेककोटि ब्रह्माण्डपालिनीं सुरसेविताम् ।
फुल्लपङ्कजमध्यस्थां पूर्णानन्दवपुर्धराम् ।।

मातृका वर्ण पीठस्थां मन्त्रकोटि स्वरूपिणीम् ।
गगनाकारसदृशां खगमध्वजसोदरीम् ।।

कामेश्वरस्य तनयां गानलोलां शुभाननाम्।
ब्राह्मी माहेश्वरीमुख्यैः सेवितां सिद्ध पूजिताम्।
ध्यायामि तां परां शक्तिं बालां कामेश्वरीसुताम्।।

***

## बालास्तोत्रम्

स्फटिकरजतवर्णं मौक्तिकामाल्यभूषं
अमृतकलश विद्याज्ञान मुद्राः कराग्रैः।
दधतमृषभकक्ष्यं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्तिमीडे ।। १

ऐङ्कारैक समस्तशत्रु रचनामावेद्य मूर्तिप्रदां
ऐश्वर्यादिकमष्टभोगफलदां ऐश्वर्यदां पुष्पिणीम्।
ऐन्द्रव्याकरणादि शास्त्रवरदां ऐरावताराधिताम्।
ऐशानीं भुवनत्रयस्य जननीमैङ्कारिणीमाश्रये।। २

क्लीङ्कारैकसमस्तवश्यकरिणीं क्लीं पञ्चबाणात्मिकां
क्लीं विद्रावणकारिणीं वरशिवां क्लिन्नां शिवालिङ्गिताम्।
क्लीबोऽपि प्रणमन्भवानि भवतीं ध्यात्वा हृदम्भोरुहे
क्लिन्नाशेषवशीकरो भवति यत्क्लींकारिणीं नौम्यहम्।। ३

सौः शब्द प्रथितामरादि विनुतां सूक्ति प्रकाशप्रदां
सौभाग्यांबुधि मन्थनामृतरसां सौन्दर्य संपत्करीम्।
सान्निध्यं दधतीं सदा प्रणमतां साम्राज्य लक्ष्मीप्रदां
सौः काराङ्कित पादपङ्कजयुगां सौषुम्नगां नौम्यहम्।। ४

***

# बालास्तोत्रम्

ऐश्वर्यं मनसेप्सितं मृदुवचो गाम्भीर्यमत्युन्नतिं
शिष्टाचार विहार पालन मथो वेदोक्तमायुः श्रियम्।
मेधावृद्धिमपत्यदारजसुखं वैराग्यमत्युन्नतं
नित्यं त्वच्चरणारविन्दभजने भक्तिं दृढां देहि मे ॥ १

क्लीं त्वं कामशराजिते कर शुकीसल्लापसंमोहिते
सौन्दर्याम्बुधिमन्थनोद्भवकलानाथानने भामिनि।
कोकाकार कुचाग्रसीमविलस द्वीणानुगानोद्यते
त्वत्पादांबुज सेवया खलु शिवे सर्वां समृद्धिं भजे ॥ २

सौम्ये पावनि पद्मसंभवसखीं कर्पूरचन्द्रप्रभां
शुद्धस्फाटिकविद्रुमग्रथित सद्रत्नाढ्यमालाधराम्।
धर्त्रीं पुस्तकमिष्टदान मभयं शुक्लाक्षमालां करैः
यस्त्वां ध्यायति चक्रराजसदने संयाति विद्यां गुरोः ॥ ३

***

# श्री बालाहृदयम्

अस्य श्रीबालात्रिपुरसुन्दरी मालामन्त्रस्य, दक्षिणामूर्तिः ऋषिः। पङ्क्तिश्छन्दः। बालात्रिपुरसुन्दरी देवता। ऐं बीजं क्लीं शक्तिः सौः कीलकम्। बालाप्रीत्यर्थे विनियोगः। मूलेन कराङ्गन्यासौ।

ध्यानम्—

आरक्तां शशिखण्ड मण्डितजटाजूटानुबद्धस्रजं
बन्धूकप्रसवारुणांबरधरां रक्ताम्बुजाध्यासिनीम्।
त्वां ध्यायामि चतुर्भुजां त्रिणयनामापीनरम्यस्तनीं
मध्ये निम्नवलित्रयांकिततनुं त्वद्रूपसंपत्तये ॥

*लमित्यादि पञ्च पूजा।*

आं ह्रीं क्रों ऐं क्लीं सौः श्रीं ह्रीं बाले परमेश्वरि आवेशय आवेशय आं ह्रीं क्रों हृदये चिरं तिष्ठ तिष्ठ हुं फट् स्वाहा।

हृन्मन्त्रं जपतोऽनेन वाञ्छितं फलति ध्रुवम्।
बालाया हृदयं ह्येतत्सर्वपायौघनाशनम्।।
सर्वपीडापहरणं सर्वसिद्धि प्रदायकम्।।

***

## बालादलम्

ओं नमो भगवति बालापरमेश्वरि रविशशिवह्निविद्युत्कोटि निभाकारे, हारनूपुरकिरीटकुण्डल हेमसूत्र मुक्तादाम भूषितसर्वगात्रे, पीयूषवरप्रिये, ऋग्यजुस्सामादि निगमकोटिभिः संस्तूयमान चरणारविन्दद्वयशोभिते, किन्नर चारणयक्षविद्याधर साध्य किंपुरुषादि परिवृतमहेन्द्र मुखत्रिदशसङ्घैः संसेव्यमाने, षट्कोटच्यप्सरसां नृत्तसन्तोषिते, अणिमाद्यष्टसिद्धिभिः पूजितपादाम्बुजद्वये, खड्गकपाल त्रिशूल भिण्डिपालशक्तिचक्र कुन्तगदापरिघचापबाण पाशवह्नि क्षेपणिकादि- दिव्यायुधैः शोभिते, दुष्टदानवगर्व शोषिणि, एकाहिक- द्व्याहिक-चातुर्थिक सांवत्सरिकादि सर्वज्वरभयविच्छेदिनि, राजचोराग्नि जलविषभूत कृत्यानानाविधज्वर स्फोटकादिनानारूपेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः परकर्ममन्त्र तन्त्र शल्यशून्यक्षुद्रादिभ्यः संरक्षिणि, सकल दुरितसंहार कारिणि सर्वमङ्गलदया संवर्षिणि, ललितोत्सङ्गनिवासिनि, महामाये श्रीपरमेश्वरि ममाभयं देहि देहि दापय स्वाहा।।

***

# श्रीबालाकवचम्

अस्य श्रीबालात्रिपुरसुन्दरीकवचस्तोत्र महामन्त्रस्य, दक्षिणामूर्तिः ऋषिः। पंक्तिश्छन्दः । बालात्रिपुरसुन्दरी देवता । ऐं बीजं, क्लीं शक्तिः सौः कीलकम्। जपे विनियोगः । मूलेन कराङ्ग न्यासौ। दिग्बन्धः ध्यानं- ऐंकारासन + संचारिणीम्।। *लमित्यादि।*

मन्दिरे सुखमासीनं भैरवं चन्द्रशेखरम्।
बद्धाञ्जलिर्नमस्कृत्य परिपप्रच्छ पार्वती ।। १

यदि प्रसन्नो देवेश यदिवाऽनुग्रहो मयि।
बालायाः कवचं ब्रूहि सदा कल्याणसौख्यदम्।। २

*शिव उवाच-*

साधु साधु महेशानि सम्यक्सम्यक्च पृच्छसि।
यत्प्रसादान्महेशानि लसत्त्रैलोक्यमुत्तमम्।। ३

ततश्चराचरं विश्वं यतो ब्रह्मादयोऽमराः।
यद्भ्रूविलासवत्प्रीत्या सिद्धयस्त्वणिमादयः।। ४

तद्बालापरमेश्वर्याः कवचं सर्वसिद्धिदम्।
कथयिष्ये शृणुष्व त्वं सर्वसौभाग्य कारकम्।। ५

शिरो रक्षतु मे बाला ललाटे पातु सुन्दरी।
कर्णौ श्रीः सर्वदा पातु नेत्रे कमलवासिनी ।। ६

ओष्ठमध्ये विशालाक्षी जिह्वां पातु सरस्वती।
मुखं मनोरमा पातु चिबुकं मे त्वचञ्चला ।। ७

कण्ठं श्रीकालिका पातु बाहू रक्षति चण्डिका।
करौ षडक्षरी पातु हृदयं हरिवल्लभा ।। ८

मातङ्गी पातु मे मध्यं भवानी जठरं मम।
नाभिं श्री भैरवी पातु गुह्यं कामेश्वरी तथा ।। ९

कटिं पायात्कामधात्री जानुनी जगदीश्वरी।
जंघे मे त्वरिता पातु जंघ पार्श्वेऽश्ववाहिनी॥ १०

पर्वतस्था पातु पादौ अंगुली भूमिवासिनी।
अग्रतस्त्रिपुरा पातु पृष्ठतो मम भैरवी॥ ११

दक्षिणे सुन्दरी पातु वामे मङ्गलदायिनी।
ऊर्ध्वं ज्योतिष्मती शक्तिः अधोऽनन्तस्वरूपिणी॥ १२

सर्वशत्रुहरा दुर्गा पातु मे विजया रणे।
गृहं रक्षेद्भद्रकाली वाचं वाग्वादिनी मम॥ १३

ओष्ठौ मे मातृकाः सर्वाः सर्वकार्येषु सर्वदा।
इत्येतत्कवचं प्रोक्तं यः पठेत्सुसमाहितः॥ १४

दिवा वा यदि वा रात्रौ त्रिसन्ध्यं भक्तिमान्नरः।
ज्ञात्वैतत्कवचं पुण्यं सर्वान्कामानवाप्नुयात्॥ १५

***

## श्रीबालामहामाला

(न्यासा ध्यानमन्यच्च मूलमन्त्रवत्)

ओं नमो भगवति पराशक्ते चण्डि कपालिनि योगिनि अट्टाट्ट हासिनि ओड्याणपीठ निवासिनि। एह्येहि पीठे महापीठे श्रीं ह्रीं ऐं सौः सर्वकार्यार्थसाधिनि, योगिनि योगपीठस्थिते त्र्यक्षरि (त्रिपदे) त्रिकोणनिवासिनि, वेतालापस्मार यक्षराक्षसभूतप्रेत-पिशाचोपद्रव निवारिणि, ऐं एह्येहि पुत्रमित्रकलत्रबान्धवभ्रातृ-परिजनसहितस्य मम वज्रशरीरं कुरु कुरु। स्वकुलस्थितं राजकुलस्थितं सुषुप्तिस्थितं जाग्रत्स्थितं, दिक्षुस्थितं, गृहस्थितं बाह्यस्थितं, अन्तःस्थितं, मां गृहपरिवारान् रक्ष रक्ष सर्वशङ्का

विनाशय विनाशय। एकाक्षरि व्यक्षरि त्र्यक्षरि, पञ्चाक्षरि, कालमृत्युं निवारय निवारय बन्धय बन्धय स्रावय स्रावय, ग्रासय ग्रासय, ओड्याण पीठ प्रसादिनि, जालन्धर पीठ प्रसादिनि, कामगिरिपीठप्रसादिनि, देवि त्वत्प्रसादं कुरु कुरु। एकाह्निक द्व्याह्निक त्र्याह्निक चातुर्थिकादि सर्वज्वरान् नाशय नाशय सर्वं भर्त्सय भर्त्सय, विषज्वरं नाशय नाशय ऐं एह्येहि इन्द्रवज्रेण यमदण्डेन गरुडपक्षवातेन महाकाली स्वरूपिणि सर्वानर्थानापदो विद्रावय विद्रावय निर्भयं कुरु कुरु मां रक्ष रक्ष, ममाभयं कुरु कुरु। सर्वविद्यावाग्धोरणीं कुरु कुरु, ऐं क्लीं सौः सौः क्लीं ऐं मम सर्वजनवशं कुरु कुरु मम दुरितान् हुं फट् स्वाहा।

* * *

## बालायन्त्रविधिः।

बिन्दुत्रिकोणषट्कोणं वृत्तमष्टदलं तथा।
भूपुरद्वयसंयुक्तं बालायन्त्रं विधीयते॥

बिन्दुमध्ये प्रणवं, त्रिकोणेषु ऐं क्लीं सौः, इति, षट्कोणेषु ऐं क्लीं सौः सौः क्लीं ऐं इति, केसरेषु स्वरान्, पद्मपत्रेषु क - च - ट - त - प - य - श - ळ वर्गवर्णान् विलिख्य, भूपुरे दिक्पालबीजान्, बिन्दुमध्यस्थ प्रणवोदरे शक्तिं, तत्परितः प्राणं, तत्परितः प्राणप्रतिष्ठामन्त्रबीजं, तदधो जिह्वाबीजं, तत्पार्श्वयोः नेत्र बीजं बिन्दोर्बहिः साध्यनाम तद्बहिर्मन्त्रगायत्रीं तद्बहिर्यन्त्रगायत्रीं तत्परितः भूतबीजं, अष्टपत्राद्बहिः मातृकां, भूपुरे दिक्पालबीजं, सर्वोर्ध्वे भागे वश्यां विलिखेत्। त्रिपुरादेव्यै च विद्महे महादेव्यै च धीमहि। तन्नः क्लिन्ना प्रचोदयात् इति।

* * * *

# बालागीतम्

मुत्तुस्वामिदीक्षित कृतम्

कल्याणी रागे - मिश्र - चापुताले

भज रे रे चित्त बालाम्बिकाम्
भक्तकल्पलतिकां - भज रे

अनु :- निजरूपदानदक्षचरणां अरुणां नित्यां
कल्याणीं शर्वाणीं - भज रे

चरणं - श्रीमद्वाग्भवकूट चतुर्वेदस्वरूपिणीं
शृङ्गारकामराजोद्भव सकलविश्वव्यापिनीं
देवीं शक्तिबीजोद्भव मातृकार्ण शरीरिणीं
देवनुतभवरोगहरवैद्यपतिहृदय विहारिणीं
भावरागतालमोदिनीं भक्ताभीष्ट प्रदायिनीं
सेवकजनपालन गुरुगुहरूप मुत्तुकुमारजननीं - भज रे

* * * *

## சிவபாலே உமையே

*சித்தமிசை நீ அருண தீபமாய்த் திகழ்வதும்*
*த்ரிகோண பிந்து நடுவே*
*ஜீவ பூர்ணத் தேன்மாரி பொழிவதும்*
*தெய்வ தத்துவம் மொழிவதும்*
*பக்தனென வைத்தென்னையாட் கொண்டனுக்ரக*
*பரிபாக நிலை தந்ததும்*
*பண்ணால் உன்னைப் பாட என் நாவில் நின்று நீ பரிமள*
*நடம்புரிவதும் உத்தமர்கள் நேயமும் உலகினர்*
*ஸகாயமும் உதவி*
*ஒரு துணையானதும்*
*ஒரு கணமும் எளியேன் மறந்திடா*

துன்பெருமையோதி உயிர்வாழ
அருள்வாய். அத்திமுகனாறுமுகனைத் தழுவி
காமேசரவர் மடிமீதமர்ந்த காமேசியின் மடிமீதமர்ந்த
ஜகதன்னை சிவபாலே உமையே.

★★★

## வாலை இவள்

தானென்ற வாலையிவள் ரூபம் காண
சமர்த்துண்டோ ஆண்பிள்ளை தானுமுண்டோ
பானென்ற வாமத்துக்குள்ளேயபப்பா
பராபரையாள் பல கோடி விதமுமாடி.
தேனென்ற மொழிச்சி யவள் சித்தர்க்கெல்லாம்
சிறுபிள்ளை பத்துவயதுள்ள தேவி
ஊனென்ற உடலுக்கும் நடுவு மாகி
உத்தமியாள் வீற்றிருந்த உண்மை தானே

—கருபூரார் பூஜாவிதி

★ ★ ★

## बालास्वरूपम्

वागीश्वरी ज्ञानशक्तिर्वाग्भवे ज्ञानरूपिणी।
कामराजे कामकला कामरूपा क्रियात्मिका॥
शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी।
पाति देवी त्र्यक्षरी सा बालात्रिपुरसुन्दरी॥
पारंपर्येण विज्ञाता भवबन्धविमोचनी।
संस्मृता पापहरिणी जप्ता मृत्युविनाशिनी॥
पूजिता दुःख दौर्भाग्यव्याधिदारिद्र्यघातिनी।
हुता विघ्नौघशमनी ध्याता सर्वार्थसाधिका॥

★ ★ ★

